" सप्तमाद्वत्सरादर्वाग्मृतयोर्बालकन्ययोः । पिंडोदकं त्रिरात्रेण ह्येकरात्रेण संकटे ॥
" त्रीन् पिंडान्प्रथमे दद्यात् द्वितीये चतुरस्तथा । त्रींस्तु दद्यात्तृतीयेऽन्हि बालानां पिंडकल्पना ॥
" शिशोस्त्रिवत्सराद्धूर्ध्वमुदकं पंचसप्ततिः । त्रिवर्षादुदकं पिंडं सर्वेषां तर्पणं भवेत् ॥
" त्रिरात्रं पिंडदशकं त्रिंशद्दद्यात्तिलोदकम् । आदितस्त्रिदिने कार्यं बालानां क्षुद्गरीयसी ॥
" द्वादशाद्वत्सरादर्वाक्पौगंडमरणे सति । सपिंडीकरणं न स्यादेकोद्दिष्टादि कारयेत् " ॥ ५
इत्यादीनि वचनानि द्रष्टव्यानि । पौगंडः पंचमवर्षाधिको बालः । अत्र विशेषमाहापस्तंबः—
" अनुपेतान्कन्याश्च पुनर्दहनमंत्रेणैव दहेयुः " इति । पूर्णद्विवर्षमारभ्य उपनयनपर्यंतं बालमरणे एकर्चविधिना संस्कुर्युरित्यर्थः । संचयनेऽपि विशेषमाह **स एव**—
" तृतीयेऽन्हि नवं कुंभमादाय दहनं व्रजेत् । जलेन पयसा चैव संप्रोक्ष्यास्थीन्यमंत्रतः ॥
" तानि कुंभे समोऽप्याथ पयसा पूरयेद्घटम् । 'इदं त' इति मंत्रेण घटं कुर्यात्सुरक्षितम्" ॥ इति । १०
'इदं त एकम्' इत्येकर्चा । **मंजर्यामपि**—
" त्रिवर्षादि दहेदेनमेकर्चाव्रतबंधनात् । 'अस्मात्त्वम्' इति मंत्रेण स्नात्वा दद्याज्जलाञ्जलिम् " ॥
**शौनकोऽपि**—
" एकर्चविधिना कुर्याद्भगवांच्छौनकोऽब्रवीत् । अस्मात्त्वमिति मंत्रेण सर्वमंत्रो न विद्यते "॥
**स्मृत्यंतरेऽपि**— १५
" त्रयोविंशतिमासात्तु मृतयोर्बालकन्ययोः । एकर्चा दहनं त्वस्थिपंचमात्परमव्रतात् ॥
" तुषाग्निना दहेत्प्रेतमस्मात्त्वमितिमंत्रतः । कुर्यात्संचयनं त्वस्थि चैकर्चाव्रतबन्धनात् " ॥
**अन्यत्रापि**—
" पुंसां व्रतविधेः पूर्वं दानात्पूर्वं स्त्रिया अपि । अज्ञातगोत्रनाम्नां च पौगंडानां व्रतात्परम् ॥
" राष्ट्रक्षोभे च सर्वेषां पुनर्दाहनिवृत्तये । एकर्चविधिसंस्कारं भगवांच्छौनकोऽब्रवीत् " ॥ इति । २०
**बोधायनोऽपि**—" बालान् मृतान्द्वित्रिवर्षव्यतीतान्यज्ञोपवीतस्य विधेः पुरस्तात् ॥
" अमंत्रकं चौलविधिं विधाय मंत्रेण संस्कारविधिं प्रदद्यात् " ॥ इति ।
चौलप्रभृत्युपनयनपर्यंतं सपिंडानामाशौचं त्रिरात्रम् ।
" द्विजन्मनामयं कालस्त्रयाणां तु षडाब्दिकः । आशौचं त्र्यहमेव स्यात्स्वजात्युक्तमतः परम्" ॥ इति **स्मरणात्** । नामकरणप्रभृत्युपनयनपर्यंतं बालमरणे मातापित्रोर्भ्रातॄणां च दशाहमाशौचम् । २५
त्रिरात्रं वा देशाचारानुसारेण द्रष्टव्यम् । दशाहाशौचपक्षे अष्टमादिदिनत्रये पिंडोदकसमापनम् ।
" कन्याबालकुमारेभ्यस्त्र्यहं पिंडोदकक्रियाः । कुर्याद्दशाहमाशौचं वर्तते नात्र संशयः ॥
" कन्याबालकुमाराणामष्टमादिदिनत्रये । पिंडोदके च निर्वर्त्य द्वादशे बलिमाचरेत् " ॥ इति **स्मरणात्** । बलिं नारायणं बलिम् ।
"तथा बालस्य कन्यायाः षंढस्य पतितस्य च । नारायणबलिः कार्यो ह्यन्येषां मोक्षकांक्षिणाम् " ॥ इति ३०
**व्यासस्मृतेः** । अयं च नारायणबलिश्चतुर्थवर्षमारभ्य कर्तव्यः । यदाह **बोधायनः**–"त्रिवर्षाद्युदकं पिंडं चतुर्थाद्युदकं बलिम् " इति ।
यत्तु **गौतमवचनं**—" मृतं दग्ध्वा त्रिरात्रेण त्रिवर्षाद्युदकं बलिम् " इति अत्र बलिशब्देन पिंड-बलिरुच्यते । अन्ये तु बालमरणे सर्वत्र नारायणबलिमाचरंति । ' मृतं दग्ध्वा त्रिरात्रेण ' इति

दाहसमनंतरं यत् त्रिरात्रेण समापनमुक्तं तत्पितृभ्रातृव्यतिरिक्तसंस्कर्तृज्ञातिविषयम् । पितृभ्रातॄणां दशाहमाशौचिनामष्टमादिदिनत्रयेण समापनस्योक्तत्वात् ।

" दाहयित्वा तथाप्येनमाशौचं त्र्यहमाचरेत् । त्रिरात्रमाव्रतादेशाद्दाहादित्र्यहमाशौचम् " इत्या-**द्यंगिरोयाज्ञवल्क्या**दिवचनैर्ज्ञातीनां त्रिरात्राशौचविधानात् । यावदाशौचं प्रेतस्योदकं पिंडं च दद्युः ।

५ " पूर्वाह्णे वाऽपराह्णे वा तोयमाशौचगामिभिः । संस्कर्त्रैव बलिर्देयः स हि प्रेतस्य बांधवः " ॥ इति **विष्णुसंवर्त्तादिभिः** यावदाशौचं पिंडोदकविधानात् । दाहकर्तुर्ज्ञातेस्त्रिरात्रेण समापनं दाहादि-त्रिरात्रमेवाशौचम् । यत्तु कैश्चिदुक्तम्

" दशाहं सोदकज्ञात्योः त्रिरात्रं योनिबंधुषु । विजातिषु शवोक्तं स्यात्प्रेतनिर्हरणे कृते "॥ इत्यत्र प्रेतनिर्हरणाभावेऽपि पिंडदानां दशाहसिद्धेः पुनरपि ज्ञातिग्रहणमनुपनीतनिर्हरणे दशाह-

१० सिद्ध्यर्थमिति न तत्र **संग्रहकार**वचने प्रमाणमस्ति । यदपि तेन प्रमाणमुपन्यस्तं **मनुवचनम्** ( ५।६३ )—

" रजन्याऽन्हैव चैकेन त्रिरात्रैरेव च त्रिभिः । शवस्पर्शे विशुध्यंति त्र्यहात्तूदकदायिनः " ॥ इति नात्रानुपनीताशौचं प्रकृतम् । किंतर्हि ( ५।५९ )—

" दशाहं शावमाशौचं सपिंडेषु विधीयते । अर्वाक् संचयनादस्थ्नां त्र्यहमेकाहमेव वा " ॥ इति

१५ गुणाशौचमेव प्रकृतम् । **मानवे** च विवरणे श्लोकद्वयं च व्याख्यातम्—"दशाहं निर्गुणेऽप्यसपिंडेषु अस्थ्नामा संचयनाच्च इति चतुरहोपलक्षणम् । ' चतुर्थेऽन्हि संचयनम् ' इति वचनात् । चतुरहं गुणवत्सु इत्यर्थः । त्र्यहं गुणवत्तरेषु एकाहं गुणवत्तमेषु ' रजन्याऽन्हैव चैकेन ' इत्यहोरात्रस्य निर्देशः । ' त्रिरात्रैरेव च त्रिभिः ' इति नवरात्रस्य दशभिरहोरात्रैरिति यावत् । शवस्य स्पर्शश्चेत् गुणवत्तमा अपि सपिंडा दशाहेन शुध्यंति । उदकदायिनः समानोदकास्त्रिरात्रेण शुध्यंति इत्यर्थ" इति ।

२० एवं चानुपनीतदाहे कर्तुर्ज्ञातेस्त्रिरात्रमाशौचम् । असपिंडस्य तु उदकपिंडादिप्रेतक्रियाया अकरणे सद्यःशुद्धिः । "असपिंडद्विजं प्रेतं विप्रो निर्हृत्य बंधुवत् । अनदन्नन्नमन्हैव न च तस्मिन्गृहे वसेत्" ॥ इति प्रेतगृहवासतदन्नभोजनाभावे उपनीतासपिंडनिर्हारेऽपि **मनुना** दिनमात्रविधानात् ( ५।१०१-२ ) ।

**इत्यनुपनीतमरणाशौचम् ॥**

**अथ कन्यामरणाशौचम्** । तत्रा**पस्तंबः**—

२५ "अचूडायां तु कन्यायां सद्यःशौचं विधीयते । एकाहं चूडितायां तु दत्तायां त्र्यहमिष्यते"॥ इति । **मरीचिः**—" चूडायाः करणे सद्यःशौचं प्राक् दानादेकाहं दत्तानां प्राक्परिणयात् त्र्यहम्" ॥ इति । **व्यासोऽपि**—

" आजन्मनस्तु चौलांतं कन्या यदि विपद्यते । सद्यःशौचं भवेत्तत्र सर्ववर्णेषु नित्यशः ॥

" ततो वाग्दानपर्यंतं यावदेकाहमेव हि । ततःपरं प्रवृत्तायां त्रिरात्रमिति निश्चयः ॥

३० " वाक्प्रदाने कृते त्वत्र ज्ञेयं चोभयतस्त्र्यहम् । पितुर्वरस्य च ततो दत्तानां भर्तुरेव हि ॥

" स्यात्स्वजात्युक्तमाशौचं सूतके मृतके तथा " ॥ इति । ततो वाग्दानपर्यंतमित्यादेरर्थ-**श्चंद्रिकायामुक्तः**—"ततः तस्माच्चौलाद्वाग्दानपर्यंतं कन्याविपत्तौ यावदेकाहं अहोरात्रं यावत्तावदा-शौचम् । ततः परं वाग्दानादूर्ध्वं विवाहोत्कर्षविषये वाग्दत्तावस्थयैव प्रवृद्धायां अधिकवयस्यपि

---

१ **खग**–स्पृशो । २ **क्ष**–त्रिगुणा । ३ **क**–त्रय ।

त्रिरात्रमेवेति निश्चयः। वाग्दाने कृते विवाहे चाकृते यत्र कन्या विपद्यते तत्र उभयतः पक्षत्रयस्य दिनत्रयं ततो विवाहादूर्ध्वं दत्तानां सम्यक्प्रतिपादितानां मरणे अपत्यजनने वा केवलं भर्तृपक्षस्य स्वजात्युक्तं दशाहमाशौचं स्यात् । विवाहोत्कर्षवच्चूडाकरणवाग्दानयोरुत्कर्षे आ चौलात्सद्यः आ वाग्दानादेकाहमेवेति निश्चयः न्यायसाम्यादिति ।

**अन्ये तु**—चौलस्य कालोपलक्षणत्वादप्राप्ततृतीयवर्षायाः कन्याया मरणे सद्यःशौचम्। ५ तृतीयवर्षमारभ्य कृतचूडाया अकृतचूडाया वा मरणे आ वाग्दानादेकाहम् । अकृतेऽपि वाग्दाने गर्भाष्टमाब्दात्प्रागेकाहम् । ततोऽप्यकृते दाने अष्टमवर्षप्रभृति कन्यासपिंडानां त्रिरात्रमाशौचं भवति। दानशब्दस्य कालोपलक्षणत्वात् । 'अष्टवर्षा भवेद्गौरी' ।

"गौरीं वा वरयेत्कन्यां ह्यष्टवर्षोऽष्टवर्षां वा । विवाहस्त्वष्टवर्षायाः कन्यायास्तु प्रशस्यते"॥ इत्यादिवचनैः प्रदानं प्रत्यष्टमवर्षस्यैव मुख्यकालत्वावगमात् । यद्यप्यत्र दानमुपलक्षणं तथापि साक्षात् १० दानक्रियायां निर्वृत्तायामेव वरपक्षस्यैतदघं भवति । अन्यथा वरपक्षस्यासंभवात् । अतोऽष्टमवर्ष-प्रभृत्यकृते दाने पितृपक्षस्य कन्यासपिंडस्य त्रिरात्राशौचमित्याहुः ।

त्रिरात्रमित्यस्य दृष्टे रजस्यपवादमाह **शंखः**—

"पितृवेश्मनि या नारी रजः पश्यत्यसंस्कृता । तस्यां मृतायां नाशौचं कदाचिदपि शाम्यति"॥ इति स्वजात्युक्तदशाहादिकालादर्वाक् कदाचिदपि न शाम्यतीत्यर्थः। वाग्दत्ताया रजोदर्शने पितृवेश्मनि १५ या नारी रजः पश्यतीत्यादिवचनोक्तं द्रष्टव्यमिति **चंद्रिकायामुक्तम्** । **संग्रहे**—

"आ चौलात्सद्य आ दानान्निशोर्ध्वं त्वा विवाहतः । त्र्यहं कन्यामृतौ जातिष्वघं पूर्णमृतूद्भवेत् ॥

"त्रिरात्रं वरतद्‌ज्ञात्योर्दत्तानूढामृतावघम् । पूर्णं भ्रातुश्च पित्रोश्च कन्याबालमृतौ सदा" ॥ इति ।

**स्मृत्यर्थसारे**–"कन्यामरणे त्रिपुरुषविषयज्ञातीनामाचौलकरणाद्वा चौलकालाद्वा स्नानेन शुद्धिः । स्त्रीषु सापिंड्यं त्रिपुरुषमेव । अप्रत्तासु ततो वाग्दानादर्वागेकाहमाशौचं ततो विवाहादर्वाक्प्रति- २० पक्षेऽपि त्रिपुरुषपर्यंत त्रिरात्रं वाग्दानाभावे विवाहनिश्चयावधिरित्येके" इति । **स्मृत्यंतरे** च--

"दत्ताऽनूढा च कन्या या संस्कार्या भर्तृगोत्रतः । उभयोर्वंशयोश्चैव त्रिरात्रमघमिष्यते"॥ वारिपूर्वं वाचा दत्ता अनूढा च या कन्या तस्या मृतौ वंशद्वयस्य त्रिरात्राशौचमित्यर्थः ।

तथा **मरीचिः**—

"वारिपूर्वं प्रदत्ता या या नैव प्रतिपादिता । असंस्कृता सा विज्ञेया त्रिरात्रमुभयोः समम्"॥ इति । २५

**मनुः**—( ५।७१ )

"स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुध्यंति बांधवाः । यथोक्तेनैव कल्पेन शुध्यंति च सनाभयः"॥ इति । बांधवा वरसपिंडाःपितृपक्षीयास्त्रिपुरुषपर्यंताः कन्यासपिंडाश्च त्रिरात्रेण शुध्यंति। सनाभयः सोदराः । ते मातापित्रोरप्युपलक्षणार्थाः । अतो मातापितृसोदरास्तु यथोक्तेन कालेन शुध्यंतीत्यर्थः ।

"कन्याबालकुमारेभ्यस्त्र्यहं पिंडोदकक्रियाः। कुर्याद्दशाहमाशौचं वर्तते नात्र संशयः"॥ इति **स्मृतेः**। ३० पितृभ्रातॄणां कन्यामृतौ दशाहमाशौचमित्याहुः । **अपरे तु**—

"प्रत्ताप्रत्तासु[1] योषित्सु संस्कृतासंस्कृतासु च । मातापित्रोस्त्रिरात्रं स्यादितरेषां यथाविधि" ॥ इति।

**कार्ष्णाजिनिस्मरणात्** ॥

"अप्रत्तायां मृतायां तु कन्यायां च त्रिरात्रकम्। आशौचं बांधवानां तु पित्रादीनां प्रकीर्तितम्"॥ इति **मार्कंडेयस्मरणाच्च** त्रिरात्रमित्याहुः । यथादेशाचारमत्र व्यवस्था । ३५

---

१ क्ष–पृक्तापृक्तासु ।

कन्यायाः खननादिसंस्कारो बालवदेव द्रष्टव्यः । उदकादिकमपि तद्वदेव । अत्र **गौतमः** (१४।३१-३३)—"उदकदानं सपिंडैः कृतचूडस्य । तत्स्त्रीणां चैके प्रत्तानाम्" इति । अस्यार्थः तद्वदकदानं स्त्रीणां कृतचौलानां च कर्तव्यम् । एके मन्यन्ते प्रत्तानामेव स्त्रीणामुदकदानं भर्तृपक्षे अप्रत्तानां तु नैवोदकदानमिति ।

५ **बोधायनोऽपि**—

"अप्रत्तासु च कन्यासु प्रत्तास्वेकेह कुर्वते । लोकसंग्रहणार्थं हि तदमंत्राः स्त्रियो मताः" ॥ इति ।
**ऊनद्विवर्षाया ऊढायाः संस्कारक्रमः** । खननादिविकल्पोऽनूढाविषय एव । ऊढासु तृतीयवर्षात्प्रागपि दाह एव

"त्रिवर्षात्प्राग्विवाहेऽपि मरणं याति कन्यका । निखनेद्वा क्षिपेद्वाऽपि पुनःसंस्कारमर्हति" ॥ इति
१० **स्मरणात्** । खननत्यागयोः संस्कारत्वेऽपि पुनर्विधानाद्दाह एव संस्कार इति केचिद्व्याचक्षते ।
**अपरे तु** खनित्वा पुनरुत्थाप्य दहेदिति । तथा च स्मर्यते—

"ऊनद्विवर्षादर्वाक्तु ऊढायाः खननं भवेत् । उत्थाप्य संदहेत्पश्चात्सापिंड्यं तं समाचरेत् ॥
"ऊनद्विवर्षकन्यायाः पाणिग्रहणकर्मणि । खनित्वा निक्षिपेद्यामं पुनः संस्कर्तुमर्हति" ॥ इति च ।
सपिंडीकरणांतं च कर्म कर्तव्यम् । तदुक्तं **गृह्यपरिशिष्टे**

१५ "अष्टमाद्वत्सरादूर्ध्वं गृहस्थब्रह्मचारिणोः । सपिंडीकरणं कुर्यान्न प्रागिति यमोदितम् ॥
"द्वादशाब्दादथाप्यर्वाक् गृहस्थस्य सपिंडनम् । तथोढायाश्च कर्तव्यं द्वादशात्परमन्यथा" ॥
अन्यथा अनूढाया इति द्वादशाब्दात्परं सपिंडनमित्यर्थः । **मार्कंडेयः**—

"स्त्रीणामुपनयनस्थाने विवाहः परिकीर्तितः । सर्वा एव क्रियाः कार्यास्तत ऊर्ध्वं समंत्रकाः ॥
"उद्वाहितानां नाशौचं पितृपक्षे विधीयते" । पितृगोत्रतः पिंडाशौचनिवृत्तौ हेतुमाह **पैठिनसिः**—
२० "दत्ता कन्या परैव भवति" इति । ऊढा कन्या भर्तृगोत्रैव भवतीत्यर्थः ।

"एकत्वं सा गता भर्तुः पिंडे गोत्रे च सूतके" इति **स्मरणात्** ।

**स्वगृहे पुत्रीप्रसवादिनिमित्ताशौचम्**। अत्र विशेषमाह **विष्णुः** (२२।३१-३३)—"स्त्रीणां विवाहः संस्कारः संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे । तत्प्रसवमरणे चेत्पितृपक्षगेहे भवेतां तदैकरात्रं त्रिरात्रं वा" इति । स्वगृहे प्रसवे मरणे वा पितृव्यादिबांधवानामेकरात्रं पित्रोस्त्रिरात्रमित्यर्थः।
२५ तथा च **व्यासः**—

"दत्ता नारी पितुर्गेहे सूयेताथ म्रियेत वा । तद्बंधुवर्गस्त्वेकेन शुचिस्तज्जनकस्त्रिभिः" ॥ इति ।
अत्र जनकग्रहणं जनन्याः सोदरभ्रातॄणां च प्रदर्शनार्थं तेन पितृगृहे प्रसवे मातापितृसोदरभ्रातॄणां त्रिरात्रं तत्रैव प्रसवे पितृव्यमातुलादिबंधूनामेकरात्रमिति च **चंद्रिकायां** व्याख्यातम् ॥

**भारद्वाजोऽपि**—

३० "बंधूनां मातुलादीनां प्रसूतिर्मरणं गृहे । तेषामेकाहमाशौचं पितुस्तु त्र्यहमेव च" ॥ इति ।

**दीपिकायाम्**—

"पितृगेहे मृतायां तु प्रत्तायां दुहितर्यपि । सूतिकायां च त्र्यहं पित्रोस्तत्सुतानां दिनं भवेत् ॥
"पितृगेहे भवेदेवं दिनमन्यत्र नेष्यते । स्ववेश्मनि मृतायां तु तत्पित्रोस्तु त्र्यहं भवेत् ॥
"तदभावे तत्सुतानामेकस्मिन्भवने यदि" । इति ।

**षडशीतौ**—"यत्र तूद्वाहिता कन्या पितृगेहे प्रमीयते । पित्रोस्त्रिदिनमन्येषां चाहरित्येक ऊचिरे ॥
" पितुर्गेहादतोऽन्यत्र यदि पुत्री प्रमीयते । पक्षिणी तत्र पित्रोस्तु नान्येषामिति निश्चयः॥
"एवं भ्रातृगृहे यत्र भगिनी वा विपद्यते । भ्रातुस्त्रिदिनमाशौचं भ्रातृव्याणां तु नैव हि"॥ इति ।
**संग्रहे**—
" बंधुष्वहस्त्र्यहं पित्रोरूढा तत्तद्गृहे यदि । प्रसूताऽन्यगृहे सूता मृता वा तस्य नास्त्यघम् " ॥ इति । ५
अन्यगृह इति अन्यस्य गृहे अन्या यदि सूता मृता वा तस्यान्यस्याघं नास्तीत्यर्थः ।
**शंखः**—" गृहे मृतासु दत्तासु प्रसूतासु त्र्यहं तथा " इति । **स्मृत्यंतरे** विशेषः—
" यदि कन्या पितुर्गेहे पुमांसं जनयेत्तदा । त्रिरात्रं सूतकं पित्रोः कन्यासूतौ तु पक्षिणी" ॥ इति ।
अत्र **चंद्रिकायाम्**—" मातापित्रोः स्वगृहे जनने मरणे वा त्रिरात्रं गृहांतरेऽपि मरणे त्रिरात्रं
प्रसवे तु पित्रोरपि नास्त्याशौचं कारणाभावात्स्वगृहप्रसूतिनिबंधनत्वात् त्रिरात्राशौचस्य " ॥ इति । १०
अत्र केचित्प्रसवार्थमर्थदाने सति अन्यगृहे पुत्रीप्रसवेऽपि पितुस्त्र्यहमनुष्ठेयमिति लोकाचारानुसारेण
वदंति । बंधुव्यतिरिक्तस्यान्यस्य गृहे कस्याश्चित्प्रसवे मरणे वा तस्यान्यस्य तद्गृहस्यापि
नाशौचम् ।
" श्रोत्रिये तूपसंपन्ने त्रिरात्रमशुचिर्भवेत् । अश्रोत्रिये त्वहः कृत्स्नमनूचाने तथा गुरौ " ॥ इति
**मनुना** ( ५।८० ) श्रोत्रियाश्रोत्रियपुरुषोल्लेखेनैव गृहवासिजननमरणाशौचस्मरणात् । न[1] स्त्री- १५
मृताविदं किंचिदिति च स्त्रीमरणे उपसंपन्नाशौचस्य निषेधात् ।
" द्रव्याणि स्वामिसंबंधात्तदघे त्वशुचीनि वै । स्वामिशुध्यैव शुध्यंति वारिणा प्रोक्षितान्यपि "॥ इति
**स्मृत्या** पुरुषस्याशौचसंभवे स्वामिसंबंधद्वारा तद्गृहद्रव्यकर्मणां दुष्टत्वात् । अतः स्वामिन
आशौचाभावे तद्गृहस्यापि नाशौचम् । यत्तु **स्मर्यते**—
" न तावच्छुध्यते भूमिः यावत्तस्यादनिर्दिशम् । न तत्र कर्म कुर्वीत पितृदैवादिकं क्वचित् "॥ इति २०
तत्प्रेतक्रियाकरणे वेदितव्यम् ।
" दहनांतं गृहाशौचं यत्र पिंडोदकक्रिया । दशरात्रमिति ज्ञेयं प्रेतस्तत्रैव तिष्ठति " ॥ इति
**स्मरणात्** । अस्त्वेवं मृतिविषये । प्रसवे अन्यस्य गृहस्य वा कथं सूतकाभाव इति चेन्मैवम् ।
गरीयसोऽपि शावाशौचस्याभावोक्त्या सूतकाभावस्य कैमुत्यसिद्धेः । तत्सद्भावे प्रमाणाभावाच्च ।
न हि क्वचिदपि बंधुव्यतिरिक्तान्यस्य गृहस्य वा शौचप्रतिपादकं प्रमाणं दृश्यते । अतः स्वामिन २५
आशौचे सति तद्गृहे दैवपित्र्यादिकं कर्म न कार्यम् । गृहस्वामिन आशौचाभावेऽपि तत्र प्रेत-
क्रियाकरणे दैवपित्र्यादि कर्म न कर्तव्यम् । गृहस्वामिन आशौचाभावे तत्र प्रेतकार्यस्याकरणेन
प्रसवमरणनिमित्तमाशौचं गृहस्येति निर्णयः ।
**अथोपनीताशौचम्** । तत्र **याज्ञवल्क्यः** ( प्रा. २३ )—
" त्रिरात्रमा व्रतादेशाद्दशरात्रमतः परम् " ॥ इति । व्रतादेश उपनयनम् । ततः गर्भसप्तमा- ३०
दब्दाद्वा परं बाल्ये यौवने वार्धके वा मरणे दशरात्रमाशौचं भवतीत्यर्थः । तथा **दीपिकायाम्**—
" अनुपेत उपेते वा मृते गर्भाष्टमे समे । ब्राह्मणानां सपिंडानां दशरात्रमघं भवेत् " ॥ अस्मिन्विषये
**मनुरपि** ( ५।५९ )—"दशाहं शावमाशौचं सपिंडेषु विधीयते" इति । एतच्च ब्राह्मणविषयम् ।

---

१ क्ष—त्रपवने । २ क्ष—नस्मृताविदे ।

"शुध्येद्विप्रो दशाहेन द्वादशाहेन भूपतिः। वैश्यः पंचदशाहेन शूद्रो मासेन शुध्यति" ॥ (५।८२) इति तेनैवोक्तत्वात्। **पारस्करश्च**—" उपनीतस्य पूर्णाघम् " ॥ इति। यत्तु **याज्ञवल्क्येनो**क्तम् (प्रा. १८)—" त्रिरात्रं दशरात्रं वा शावमाशौचामिष्यते " इति तत्र त्रिरात्रमित्येतत्समानोदकविषयम्।

५ एवमेव **बृहस्पतिः**—

"दशाहेन सपिंडास्तु शुध्यंति प्रेतसूतके। त्रिरात्रेण सकुल्याश्च स्नात्वा शुध्यंति गोत्रजाः" ॥ इति सकुल्याः समानोदकाः। सपिंडादीनां भेदः पूर्वमेवोक्तः। **जाबालिरपि** "त्र्यहं समानोदकानां गोत्रजानामहः स्मृतम्" इति। अतः सपिंडानां सप्तमपुरुषावधिकानामविशेषेण दशरात्रं समानोदकानां तु त्रिरात्रम्। यत्पुनः **शंखवचनम्**—

१० " चतुर्थे दशरात्रं स्यात्षण्णिशाः पुंसि पंचमे। षष्ठे चतुरहाच्छुद्धिः सप्तमे त्वहरेव तु " ॥ इति तद्विगीतत्वादनादरणीयम्। यद्यप्यविगीतं तथापि मधुपर्कांगपश्वालंभवल्लोकविद्विष्टत्वान्नानुष्ठेयम् ॥ " अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु " इति **मनुस्म**रणात्। न च सप्तमे प्रत्यासन्ने सपिंडे एकाहो विप्रकृष्टाष्टमादिषु समानोदकेषु त्र्यह इति युक्तम्" इति **विज्ञानेश्वरेणोक्तम्** (पृ. १७३ पं. ५–१०)—यदपि **मनु**नोक्तम् (५।५९)—

१५ " दशाहं शावमाशौचं सपिंडेषु विधीयते। अर्वाक् संचयनादस्थ्नां त्र्यहमेकाहमेव वा " ॥ इति। तत् "कुसूलधान्यको वा स्यात्कुंभीधान्यक एव वा। त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा"॥ इति। तत्प्रतिपादितचतुर्विधगृहस्थाभिप्रायमिति **विज्ञानेश्वरेणोक्तम्**—**पराशरोऽपि** (३।५–६)—

" एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः। त्र्यहात्केवलवेदस्तु निर्गुणो दशभिर्दिनैः ॥

" जन्मकर्मपरिभ्रष्टः संध्योपासनवर्जितः। नामधारकविप्रस्तु दशाहं सूतकी भवेत् " ॥ इति।

२० अग्निशब्देनाहवनीयादयो गृह्यंते। अयमाशौचसंकोचो बहुतरसपिण्डस्य संकुचितवृत्तेः प्रतिग्रहादौ द्रष्टव्यः। एवं च सत्येकाहविधानमश्वस्तनिकविषयं त्र्यहविधानं त्र्याहिकविषयम्। असंकुचितवृत्तेस्तु दशाहमिति व्यवस्था। अग्निवेदसमन्वितत्वमश्वस्तानिकस्यैकाहाशौचाविधिः स्तुत्यर्थः। जन्मकर्मपरिभ्रष्टः गर्भाधानादिसंस्काररहितः संध्योपासनादिनित्यनैमित्तिकान्यकुर्वाणः। अत एवासौ नामधारकविप्रो भवति। तस्यापि दशाहमेवाशौचमिति **माधवीये** व्याख्यातम्।

२५ उक्तार्थाभिप्रायेणैव **बृहस्पतिरपि**—

" त्रिरात्रेण विशुध्येत विप्रो वेदाग्निसंयुतः। पंचाहेनाग्निहीनास्तु दशाहात् ब्राह्मणब्रुवः " ॥

**पितामहोऽपि**—

" एतत् ज्ञात्वा तु मेधावी जपं होमं करोति यः। न भवेत्सूतकं तस्य मृतकं च न [1]विद्यते " ॥ एतद्गायत्रीयाथार्थ्यम्। **दक्षोऽपि**—

३० " ग्रंथार्थतो विजानाति वेदमंगैः समन्वितम्। सकल्पं सरहस्यं च क्रियावांश्चेन्न सूतकम् " ॥

**देवलोऽपि**—

" चत्वार्यधीतवेदानामहान्याशौचमिष्यते। वेदाग्नियुक्तविप्रस्य त्र्यहमाशौचमिष्यते ॥

" एताभ्यां श्रुतयुक्तस्य दिनमेकं विधीयते। एतैः साकं कर्मयुक्तः सद्यः शुचिरसंशयः ॥

---

१ याज्ञवल्कीय आचारे १५६

"अस्नात्वा चाप्यहुत्वा च अदत्वा च तथा द्विजः। एवंविधस्य विप्रस्य सर्वदा सूतकं भवेत्" ॥ इति ।
**स्मृत्यर्थसारे**—"दशाहस्थाने त्रिरात्रपक्षिण्येकाहसद्यःशौचपराणि वाक्यान्यापद्विषयाणि योज्यानि। समानोदकविषयाश्च संकुचिताशौचकल्पाः पक्षिण्येकाहसद्यःशौचरूपा आपद्विषयाः" इति । एवमादिकोऽघसंकोचो युगांतरविषय इति **स्मृतिरत्ने** । तथा च **हारीतः**—

" दशाह एव विप्रस्य सपिंडमरणे सति। कल्पांतराणि कुर्वाणः कलौ व्यामोहकिल्बिषी " ॥ इति। ५
**चंद्रिकायामपि**—

" वानप्रस्थाश्रमस्यापि प्रवेशो विधिचोदितः । वृत्तः स्वाध्यायसापेक्षमघसंकोचनं तथा ॥

" एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः । निवर्तितानि सर्वाणि व्यवस्थापूर्वकं बुधैः " ॥ इति ।
अतो गुणवतो निर्गुणस्यापि सपिंडस्य दशाहमेवाशौचं समानोदकस्य त्र्यहमिति विवेकः ।
**ब्रह्मचारिणः सद्यःशौचम्** । ब्रह्मचर्योत्तरकालं **कृतसमावर्तनस्याशौचमाह मनुः** (५।८७)— १०

"आदिष्टी नोदकं कुर्यादा व्रतस्य समापनात् । समाप्ते तूदकं कृत्वा त्रिरात्रमशुचिर्भवेत्" ॥ इति ।
आदिष्टं व्रतं समावर्तनं तद्वानादिष्टी ब्रह्मचारी व्रतस्थब्रह्मचर्यस्य आ समापनात् पित्रादिव्यतिरिक्तस्य नोदकं कुर्यात्पित्रादिनिर्हारे कुर्यादेव ।

" आचार्यं स्वमुपाध्यायं पितरं मातरं गुरुम् । निर्हृत्य तु व्रती प्रेतं न प्रेतेन वियुज्यते ॥

" मातामहं मातुलं च तत्पत्न्यौ चानपत्यके । प्रतिसंस्कुरुते यस्तु व्रतलोपो न तस्य हि ॥ १५

" ब्रह्मचारी यदा कुर्यात्पिंडनिर्वपणं पितुः । तावत्कालं तदाशौचं ततः स्नात्वा विशुध्यति ॥

" आचार्यपित्रुपाध्यायान् निर्हृत्यापि व्रती व्रती । संकटान्नं च नाश्नीयान्न च तैः सह संवसेत् ॥

" दहनादिसपिंडान्तं ब्रह्मचारी करोति चेत् । अन्यत्र मातापित्रोः स्यादुपनीय पुनर्व्रती ॥

" आचार्यं स्वमुपाध्यायं गुरुं वा पितरं च वा । मातरं वा स्वयं दग्ध्वा व्रतस्थस्तत्र भोजनम् ॥

" कृत्वा पतति यत्तस्मात्प्रेतान्नं नात्र भक्षयेत् । अन्यत्र भोजनं कुर्यान्न च तैः सह संविशेत् ॥ २०

" एकाहमशुचिर्भूत्वा द्वितीयेऽहनि शुध्यति " ॥ इति **मनुभृगुयाज्ञवल्क्या**दिस्मरणात् । 'समाप्ते तूदकं कृत्वा' इति समाप्ते ब्रह्मचर्ये कृतसमावर्तनस्य सपिंडमरणे सति त्रिरात्रमाशौचं भवेदित्यर्थः । तथा **मानवे** व्याख्याने **स्मृतिरत्ने** च समाप्ते ब्रह्मचर्ये कृतसमावर्तनस्याकृतविवाहस्यायं त्रिरात्रविधिरिति । एवं च " अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः " इति वचने सत्यपि " त्रिरात्राशौचविधायकविशेषवचनेन त्रिरात्राशौचोदकदानानंतरमेवोद्वाह " इति युक्तम् ।२५
**विज्ञानेश्वरीये** विशेषः । ब्रह्मचर्योत्तरकालं पूर्वमृतानां सपिंडानामुदकदानमाशौचं कुर्यादेव । यथा **मनुः** ( ५।८७ )—

" आदिष्टी नोदकं कुर्यादा व्रतस्य समापनात् । समाप्ते तूदकं दत्वा त्रिरात्रमशुचिर्भवेत् " ॥
आदिष्टीति ब्रह्मचर्यस्य " अपोशानकर्म कुरु मा दिवा स्वाप्सीः " इत्यादि व्रतादेशयोग्यो ब्रह्मचार्युच्यते । आचार्यः पुनरेव मन्यते आदिष्टीति प्रक्रांतप्रायश्चित्तः कथ्यते तस्यैवायमुदकदानादि- ३०
निषेधः प्रायश्चित्तरूपव्रतसमाप्त्युत्तरकालमुदकदानाद्याशौचविधिरिति । **दशकटीकायां** तु कृच्छ्रचांद्रायणवेदपारायणब्रह्मचार्यविवाहयज्ञादिपरिसमाप्तिर्यदा आशौचकालमध्ये स्यात्तदा शेषाशौचमनुष्ठेयम् । यस्याशौचकालादूर्ध्वं परिसमाप्तिः स्यात्तदा मरणविषये अतिक्रान्ताशौचमनुष्ठेयम् । अत्र **मनुः** 'आदिष्टी नोदकं कुर्यात्' इत्यादि व्रतमस्यादिष्टमित्यादिष्टी व्रती ब्रह्मचारी । स

ऋत्विक्दीक्षितानामप्युपलक्षणार्थः । अत्र ' समाप्ते तूदकं कृत्वा ' इत्येतत् " अतिक्रांते दशाहे च त्रिरात्रमशुचिर्भवेत्" इत्यस्यानुवादकम् । अतो व्रतिनां जातिमरणे सति संवत्सरादूर्ध्वं व्रत-समाप्तिश्चेत्सद्यः शौचमेवेति । **शातकेऽपि**—

"कृच्छ्रादीनां समाप्तिश्चेदघे शिष्टाहमिष्यते । तद्बहिश्चेत्र्यहादि स्यादित्याह भगवान्मनुः" ॥ इति ।

५ तद्व्याख्याने आदिशब्देन वेदपारायणप्रायश्चित्तव्रतादीनामुपसंग्रहः । एतेषां समाप्तिर्यद्यघमध्ये स्यात्तदा शिष्टाहविधिर्भवति । तत्परं चेत्समाप्तिः तदा "त्रिरात्रं त्रिषु मासेषु" इत्युक्तविधिः स्यात् । तथाह **मनुः** ( ५।८७ )—

"आदिष्टी नोदकं कुर्यादा व्रतस्य समापनात् । समाप्ते तूदकं कृत्वा त्रिरात्रमशुचिर्भवेत् "॥ इति । त्रिरात्रमिति पाक्षिण्यादेरप्युपलक्षणम् । कृच्छ्रव्रतादिकमस्यादिष्टमित्यादिष्टी व्रती ब्रह्मचारी च ।

१० ब्रह्मचर्यव्रतस्याप्यादिष्टत्वात् । अतः व्रतसमाप्तिपर्यंतमादिष्टी उदकमाशौचं च न कुर्याद्वत्सरमध्ये तत्समाप्तौ त्र्यहाद्याशौचमुदकदानं च कुर्यात्तत्परं उदकमात्रमेव ।

" सर्वेषां वत्सरे पूर्णे प्रेते दत्वोदकं शुचिः " इति **याज्ञवल्क्यस्मरणादिति** । एवं च अघमध्ये ब्रह्मचर्यसमाप्तौ शिष्टाहविधिः । अघात्परं वत्सरमध्ये ब्रह्मचर्यसमाप्तौ त्र्यहपाक्षिण्यहोरात्रविधिरुदकं च वत्सरात्परं तत्समाप्तौ उदकमात्रमेवेति **विज्ञानेश्वरादिभिरुक्तम्** । एतच्च

१५ शिष्टाचारविरुद्धम् । न हि विवाहात्पूर्वं त्र्यहमाशौचमुदकं चानुतिष्ठन्ति । अतः "समाप्ते तूदकं कृत्वा त्रिरात्रमशुचिर्भवेत् " इति कृतसमावर्तनस्याकृतविवाहस्यायमपूर्वस्त्रिरात्रविधिरिति यदुक्तं तदेव युक्तमित्याहुः ।

**अनौरसपुत्रजननाद्याशौचम्** । अनौरसपुत्रजननाद्याशौचमाह **विष्णुः**—( २२।४२ )

" अनौरसेषु पुत्रेषु जातेषु च मृतेषु च । त्रिरात्रेण भवेच्छुद्धिरेकाहं तु सपिंडतः ॥

२० " परपूर्वासु भार्यासु प्रसूतासु मृतासु च " ॥ इति । अनौरसाः क्षेत्रजादयः । तानाह **मनुः** ( ९।१५९–१६० )—

" औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च । गूढोत्पन्नोऽपविद्धश्च दायादा बांधवास्तु षट् ॥

"कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा । स्वयंजातश्च शूद्रश्च षडदायादबांधवाः " ॥ इति । एतेषु क्षेत्रजादिषु जातेषु मृतेषु च दत्तादिषु मृतेषु द्विविधयोरपि पित्रोस्त्रिरात्रेण शुद्धिः । उभयविध-

२५ ज्ञात्योरेकाहाच्छुद्धिः । परो वर्तमानभर्तुरन्यः पूर्वो भर्ता यस्याः सा परपूर्वा पुनर्भूरिति यावत् । परपूर्वभार्यामरणे पूर्वपरयोर्भर्त्रोस्त्रिरात्रं उभयविधसपिंडानामहोरात्रमाशौचमित्यर्थः । तथा च **हारीतः**-

" परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च । मातामहे त्रिरात्रं स्यादेकाहस्तु सपिंडतः " इति । कृतकः पुत्रो जन्मव्यतिरिक्तैः कारणैर्जातो दत्तादिः । वाक्यार्थस्तु मातामहे मृते दौहित्रस्य त्रिरात्रं परपूर्वा-मरणे भर्त्रोस्त्रिरात्रं कृतकपुत्रमरणे प्रतिग्रहीत्रादिरूपपितुस्त्रिरात्रं तत्सपिंडानामहोरात्राशौचमिति ।

३० स्वैरिणीभर्तॄणामपि त्रिरात्रमाह **व्यासः**—

" परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च । त्रिरात्रं स्यात्तथाचार्ये स्वभार्यास्वन्यगासु च " ॥ इति । **शंखोऽपि**—

" अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च । परपूर्वासु च स्वासु त्रिरात्राच्छुद्धिरिष्यते " ॥ इति ।

**मरीचिः**—"सूतके मृतके चैव त्रिरात्रं परपूर्वयोः । एकाहस्तु सपिंडानां त्रिरात्रं यत्र वै पितुः" ॥ इति ।

३५ जनकपितुरपि त्रिरात्रमाह **मनुः** ( ५।६२ )—

" बैजिकादपि संबंधादनुरुंध्यादघं त्र्यहम् "। इति। अनुपनीतक्षेत्रजादिविषये **प्रजापतिः**—
" अत्याहृतेषु दारेषु परनारीसु तेषु च। गोत्रिणः स्नानशुद्धाः स्युः त्रिरात्रेणैव तत्पिता "॥ इति।
भिन्नपितृकसोदरविषये **मरीचिः**—
" मात्रैकया द्विपितृकौ भ्रातरावन्यगोचरौ। एकाहं सूतके प्रोक्तं त्रिरात्रं मृतके तयोः "॥
**संग्रहे**— ५
"जनने क्षेत्रजादीनां तत्पित्रोस्त्र्यहमिष्यते। तत् ज्ञात्योर्दिनमेवेत्थमुपेतानां मृतौ न चेत्॥
"पित्रोस्त्र्यहं तयोः सद्यस्त्र्यहं तेषां पितृक्षये" इति। क्षेत्रजादीनामुपेतानां मृतावित्थमेव पित्रोस्त्र्यहं तत् ज्ञात्योर्दिनमित्युक्तमेव चेदनुपनीतानां मृतौ पित्रोस्त्र्यहं तयोः तत् ज्ञात्याः सद्यःशौचं। पित्रोः क्षये क्षेत्रजदत्तादीनामपि त्र्यहमित्यर्थः। **तत्रैव**—
"पराश्रिताया भार्याया मृतौ पत्योस्त्रिरात्रकम्। तत्पक्षयोर्दिनं तस्यास्त्र्यहं भर्त्रोश्च संस्थितौ"॥ इति। १०
**याज्ञवल्क्यस्तु** (प्रा. २५)—" अनौरसेषु पुत्रेषु भार्यास्वन्यागतासु च" इति।

अत्र **विज्ञानेश्वरः** (पृ. १८३ पं. २४)—"अहरित्यनुवर्तते। अनौरसाः क्षेत्रजदत्तादयः। तेषु जातेषु उपरतेषु वा पित्रोरहोरात्रमाशौचम्। भार्यास्वन्यगतासु अन्यं प्रतिलोमव्यतिरिक्तमाश्रितासु अतीतासु चाहोरात्रमेव। न पुनः सत्यपि सापिंड्ये दशरात्रम्। प्रतिलोमाश्रितासु त्वाशौचाभाव एव। " पाखण्ड्यनाश्रितस्तेन भर्तृघ्न्यः कामगाश्च याः " इत्यनेन प्रतिषेधात् "। १५

**विष्णवा**द्युक्तत्रिरात्रस्य **याज्ञवल्क्यो**क्तैकरात्रस्य च संनिधिविदेशस्थापेक्षया व्यवस्था। यदा पितुस्त्रिरात्रं तदा सपिंडानामेकरात्रम्। अन्यथा सद्यःशौचम्। "एकाहस्तु सपिंडानां त्रिरात्रं यत्र वै पितुः " इति **मरीचि**स्मरणात् " इति।

**दत्तविषये**। एवं च दत्तस्य मरणे जनयितृप्रतिग्रहीतृरूपापित्रोस्त्रिरात्रमाशौचं द्वयोरपि ज्ञात्योरेकरात्रम्। पित्रोर्द्विविधयोर्मरणे दत्तस्य त्रिरात्रम्। उभयविधज्ञातिमरणे चैकरात्रमिति २० स्थितम्। एतत् द्विगोत्रकदत्तविषयमित्येके। उपनयनानंतरं दत्तो द्विगोत्रकः। तथा च **स्मर्यते**—
" जनकस्य तु गोत्रेण उपनीतो द्विगोत्रकः "। **स्मृत्यंतरे**ऽपि—
" उपनेतुर्भजेत् गोत्रमसंप्रज्ञातगोत्रवान्। संप्रतिज्ञातगोत्रश्चेदुभयं दत्तपुत्रवत्" ॥ इति।
**पैठीनसिरपि**—" दत्तक्रीतकृत्रिमपुत्रिकापुत्राः परिग्रहेणार्षेण जातास्ते संहतगोत्रा द्व्यामुष्यायणा भवंति " इति। उपनयनात्पूर्वं दत्तस्य जनयितृगोत्राशौचसंबंधो नास्ति। २५
तथा च **मनुः** (९।१४२)—
" गोत्ररिक्थे जनयितुर्न हरेत् दत्रिमः सुतः। गोत्ररिक्थानुगः पिंडो व्यपैति ददतः स्वधा "॥
**मरीचिरपि**—
" गोत्रांतरप्रविष्टानां दाय आशौचमेव च। ज्ञातित्वं च निवर्तेत तत्कूले सर्वमिष्यते "॥ इति।
**स्मृत्यंतरे**— ३०
" गोत्रांतरप्रविष्टास्तु संस्कार्यास्तत्कुलेन तु। जननेनैव पितरो दानेनैव निवर्तिताः॥
" दत्तस्य परिवेत्तृत्वमाशौचं दाय एव च। गृहीतृगोत्रात् संग्राह्यं श्रौतं स्मार्तं तथैव च"॥ इति।
एवं च उपनयनात्पूर्वं दत्तस्य पितृभ्रातृज्ञातिमरणे दशाहमाशौचम्। दत्तमरणेऽपि तेषां दशाह-मस्ति। अत एव प्रतिग्रहीतृमरणे दशाहमध्ये दर्शागमे दशाहेनैव दत्तकर्तृकपिंडोदकसमापनं

**स्मर्यते**—

" दशाहमध्ये यदि दर्श आपतेत् दद्युर्दशाहं तिलवारिपिंडम्।

" पुत्रीसुतो दत्तक औरसश्च शेषाः सुतास्तत्र समापयेयुः " ॥ **गालवोऽपि**—

" दौहित्रः पुत्रिकापुत्रो दत्तको ह्यौरसस्तथा। उदकं पिंडदानं च यथाकालं समाचरेत् "॥ इति।

५ **स्मृत्यंतरेऽपि**—

" यद्यमान्तर्दशाहे स्यादौरसो दत्तकृत्रिमौ। पिंडोदकं दशाहेऽन्हि दद्युरन्ये त्वमातिथौ " ॥ इति। अन्यथा दशाहाशौचाभावे 'यावदाशौचमुदकम्' ( १९।१३ ) इति **विष्णुस्मरणेन** त्रिरात्रेणैव सर्वदा समापनप्रसंगः। तथा कृतचौलभिन्नोदरभ्रातृमरणे दत्तस्य दशाहशौचमुक्तं **बृहस्पतिना**—

" भिन्नोदराणां भ्रातॄणां जातदंते मृते त्वघम्। दशाहं कृतचौले तु दत्तादीनां विधीयते " ॥

१० इत्याहुः। **अपरे तु** " दशाहमध्ये दर्शागमे दशाहेन समापनं। कृतचौलभ्रातृमरणे दत्तकस्य दहाशौचं च संस्कर्तृविषयं अन्यथा त्र्यहम्।

" मातापित्रोः क्रियाः कुर्यादौरसो यदि पुत्रकः। कुलान्तरप्रविष्टानामाशौचं त्र्यहमेव तु " ॥ इति **स्मरणात्**—अत्र सपिंडानामेकरात्रं " एकाहस्तु सपिंडानां त्रिरात्रं यत्र वै पितुः " ॥ इति **स्मरणादिति**—जनयितुः पुत्रपौत्रप्रपौत्राभावे दत्त एव मातापित्रोर्मरणे दशाहमाशौचं दाहादि

१५ सर्वं प्रेतपितृकृत्यं प्रत्यब्दं तन्मृताहे प्रावर्णं च कुर्यात्। पुत्रादिरहितसोदरभ्रातृमरणेऽपि स एव सर्वं कुर्यात्। "पूर्वभ्रातुश्च पित्रोश्चार्तौ कृत्यं स्वल्पं च दत्तके" इति **स्मरणात्**—

"दत्तस्य जनकापत्ये मृतेऽथ जनकेऽपि वा। संस्काराद्यखिलं कृत्वा दत्तो रिक्थमवाप्नुयात्" ॥ इति **स्मरणात्**। जनयितुः पुत्रांतरसद्भावे तन्मरणे दत्तस्य त्र्यहमाशौचं दत्तमरणेऽपि त्रिरात्रमाशौचं "बैजिकादपि संबंधादनुरुंध्यादघं त्र्यहम्" इति **स्मरणात्** ॥ "न ज्येष्ठं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा" इति

२० निषेधोल्लंघनेन मोहवशाज्ज्येष्ठपुत्रस्य दाने पुत्रांतरसद्भावेऽपि ज्येष्ठ एव दत्तो जनयितुर्दशाहादि सर्वं कुर्यादिति **त्रिकांड्यामुक्तम्**। तथा च **पारस्करः**—

" दत्तोऽपि न त्यजेत्पित्र्यं धनं गोत्रं च सर्वदा। दत्तस्य तूभयत्रापि संबंधं मनुरब्रवीत् " ॥ इति अयमेवोभयधनग्राही द्व्यामुष्यायण इति केचिदाहुः। पूर्वोक्तरीत्या उपनयनान्तरं दत्त इत्यन्ये इति। तदन्येषां पितृव्यतिरिक्तानां सपिंडानां च तत्स्नानमपि नास्तीत्यर्थः। **स्मृत्यर्थसारे** तु—

२५ "देशांतरादर्वाग्देशमृतौ स्वाशौचकालादूर्ध्वं श्रुतायां तद्देशं विंशतियोजनादिकं त्रेधा विभज्याद्ये च स्वामिसमीपे भागे त्रिरात्रम्। ततो दूरभागे पक्षिणी ततो दूरभागे त्वेकाहम्। एवं देशं पर्यालोच्य यत्राल्पाशौचं तदेव ग्राह्यम्। अत्राघाहानि न वर्धयेत्

" न वर्धयेदघाहानि प्रत्यूहेन्नाग्निषु क्रियाः " इति ( ५।८३ ) **मनुस्मरणात्**। लघुकल्पसंभवे गुरुकल्पाश्रयेणाघवानघानि न वर्द्धयेत्। लघुकल्पमाश्रितोऽपि वैतानाग्निषु क्रियाः प्रत्यूहेन्न

३० विहन्यादिति **मनु**वचनार्थः। देशांतरलक्षणमुक्तम्। " देशांतरस्थे मृते स्वाशौचकालादूर्ध्वं श्रुते सपिंडानां सचैलस्नानं न त्रिरात्रात् " इति। तथा च **पराशरः** ( ३।१४ )—

" देशांतरे मृतः कश्चित्सगोत्रः श्रूयते यदि। न त्रिरात्रमहोरात्रं सद्यः स्नात्वा शुचिर्भवेत् "॥ इति।

**याज्ञवल्क्योऽपि**—

" देशांतरमृतिं श्रुत्वा क्लीबे वैखानसे यतौ। मृतौ स्नानेन शुध्यंति गर्भस्रावे च गोत्रिणः "॥ इति।

अत्र **विज्ञानेश्वरः**—"यस्तु नद्यादिव्यवहिते देशांतरे मृतः तत्सपिंडानां दशाहादूर्ध्वं मासत्रया-दर्वागपि सद्यःशौचम्" इति । **षडशीतौ**—

"ज्ञातेर्मृतौ यदाशौचं दशाहात्तु बहिः श्रुतौ । एकदेश इदं प्रोक्तं स्नात्वा देशांतरे शुचिः"॥ इति ।

**देशांतरलक्षणमाह बृहस्पतिः**—

"महानद्यंतरं यत्र गिरिर्वा व्यवधायकः । वाचो यत्र विभिद्यंते तद्देशांतरमुच्यते ॥ ५

"देशांतरं वदंत्यन्ये षष्टियोजनमायतम् । चत्वारिंशद्वदंत्यन्ये त्रिंशदन्ये तथैव च"॥ इति ।

**योजनलक्षणं माधवीये**ऽभिहितम्—

"तिर्यग्यवोदरा ह्यष्टावूर्ध्वा वा व्रीहयस्त्रयः । प्रमाणमंगुलस्योक्तं वितस्तिर्द्वादशांगुला ॥

"वितस्तेर्द्विगुणोऽरत्निस्तस्मात्किष्कुस्ततो धनुः । धनुःसहस्रे द्वे क्रोशश्चतुःक्रोशं तु योजनम्"॥ इति ।

**स्मृत्यंतरे**— १०

"भाषाभेदो महानद्या व्यवधानमथाद्रिणा । त्रिंशद्योजनभेदो वा प्रत्येकं देशभेदनम्" ॥ इति ।

महानद्य उक्ता **नृसिंहपुराणे**—"गंगा यमुना गोदावरी तुंगभद्रा कावेरी चैता महानद्यः" इति ।

**वामनपुराणे**ऽपि—

"गोदावरी भीमरथी कृष्णवेणी सरस्वती । तुंगभद्रा सुप्रयोगा सिंहा कावेरी रेविका ॥

"दुग्धोदा नलिनी रेवा वारिसीता बलस्वना । महा अपि महानद्यः सह्यमूलाद्विनिर्गताः" ॥ १५

महा अपीति परिगणिताभ्योऽन्या याः काश्चिद्विस्तारवत्यः ता अपि महानद्य इत्यर्थः

एवं च महानद्या दक्षिणकूलमुत्तरकूलं च परस्परापेक्षया देशांतरं भवति । यथोक्तं **बृहन्मनुना**—

"देशनामनदीभेदो निकटे यत्र वै भवेत् । तेन देशांतरं प्रोक्तं स्वयमेव स्वयंभुवा" ॥ इति ।

देशनामानि अंगवंगकलिंगादीनि । नदीविशेषः महानदीति यावत् । एवमुक्तमतिक्रांताशौचं मातापितृव्यतिरिक्तसपिंडविषयम् । मातापितृविषये तु सन्निहितदेशे देशांतरे च दशरात्रमेव । २०

तत्र **पैठिनसिः**—

"पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः । श्रुत्वा तद्दिनमारभ्य दशाहं सूतकं भवेत्"॥ इति ।

**चंद्रिकायामिदं** व्याख्यातम्—"श्रुत्वेत्यत्र तु उर्ध्वमिति शेषो द्रष्टव्यः । ततश्च दशरात्रमध्ये तु वार्ताश्रवणे पुत्रस्यापि तच्छेषेणैव न सपिंडांतरवच्छुद्धिः" इति । **षडशीतौ**—

"देशकालादिभेदेऽपि मातापित्रोर्मृतिश्रुतौ । श्रवणादिदशाहं स्यान्निर्दशत्वमिति स्थितिः" ॥ २५

**स्मृत्यर्थसारे**—"मातापितृमरणे दशाहादूर्ध्वं वत्सराद्र्ध्वमपि पुत्रः श्रुतदिवसमारभ्य दशाह-माशौचं कुर्यादुदकपिंडादि च । पत्न्या अपि दशाहम् । "दशाहं पुत्रभार्ययोः" इति **पैठीनसि**-वचनात् । महागुरुमरणे 'दूरदेशेऽप्यतीतेऽब्देऽप्यार्द्रवस्त्रोपवासिना' तथैवाशौचादि कार्यम् । वत्सरेऽ-तीते मातुः सपत्न्या मरणे पुत्रस्य त्रिरात्रम् । "सपत्न्योः परस्परं चैवम्" इति । **स्मृत्यंतरे** च—

"यत्रकुत्रास्थितः पुत्रः श्रुत्वा पितृविपर्ययम् । श्रुत्वा तद्दिनमारभ्य दशाहं सूतकं भवेत्" ॥ ३०

**अन्यत्रापि**—

"मुख्यकर्ता विदेशस्थो मातापित्रोर्मृतौ यदि । संवत्सरे व्यतीतेऽपि कुर्यात् प्रेतक्रियां पुनः"॥ इति ।

**दक्षः**—

"महागुरुनिपाते तु आर्द्रवस्त्रोपवासिना । अतीतेऽब्देऽपि कर्त्तव्यं प्रेतकार्यं यथाविधि" ॥ इति ।

संवत्सरादूर्ध्वमपि प्रेतकार्यमाशौचोदकदानादि कार्यमित्यर्थः। **चंद्रिकायाम्**—महागुरुनिपातः इत्यत्र महागुरुशब्देन माता चोच्यते। न पुनः पितैव।
" द्वौ गुरू पुरुषस्येह पिता माता च धर्मतः। तयोर्गुरुः पिता तावन्माता गुरुतरा स्मृता "॥ इति मातुरपि गौरवातिशयस्मरणादिति। **विज्ञानेश्वरः** (पृ.१८२ पं.२७-२८)—"यस्तु पिता पुत्रानुत्पाद्य
५ वेदार्थं ग्राहयित्वा वृत्तिं च विदधाति तस्य महागुरुत्वादुपरमे द्वादशाहम् " इति। यत्तु **स्मृत्यंतरम्**—
"पिता पितामहश्चैव ज्येष्ठश्च प्रपितामहः। यश्चोपनीय सकलं वेदमध्यापयेत् स च॥
"महागुरव इत्येते पञ्च प्रोक्ता मनीषिभिः"॥ इति तत् पुत्रादीनां पश्चानां अब्दादूर्ध्वमपि यथाविधि प्रेतकार्यं कर्त्तव्यमित्येवंपरं न पुनस्तेषामुपरमे द्वादशाहाशौचप्राप्त्यर्थम्। " दशमं पिंडमुत्सृज्य रात्रिशेषे शुचिर्भवेत्" इति **स्मरणात्**।
१० " पितरि प्रोषिते प्रेते पुत्रो देशांतरे गतः। कृतक्रिये त्रिरात्रं स्याद्दशाहमकृतक्रिये "॥ इति। यत्कृतक्रिये त्रिरात्रविधानं तत्कनिष्ठपुत्रविषयम्। ज्येष्ठस्य तु
' कृतक्रियेऽपि पितरि दशाहं सूतकं भवेत्। दद्यात्तिलोदकं पिंडं सपिंडीकरणं पितुः "॥ इति दशाहविधानात् कृतस्यापि सपिंडीकरणस्य पुनःकरणविधानात् ज्येष्ठविषयत्वमस्यावगम्यते। मातृव्यतिरिक्त**पितृपत्नी**विषये **विशेषमाह**—
१५ " पितृपत्न्यामतीतायां मातृवर्जं द्विजोत्तमः। संवत्सरे व्यतीतेऽपि त्रिरात्रमशुचिर्भवेत् "॥ इति। **वरदराजीये**—"प्रागब्दाज्जननीसमं दिन्नतु तत्प्रेतोदकादिक्रियाम्"। उक्तमात्रस्य द्व्यामुष्यायणत्वाभिधानं "गोत्रांतरप्रविष्टानां दाय आशौचमेव च। ज्ञातित्वं च निवर्तन्ते" इत्यादिपूर्वोक्त**मन्वा**दिवचनविरोधादुपेक्ष्यम्। **स्मृत्यंतरे**—
" दत्तस्य पुत्रजनने मरणे पूर्वगोत्रिणाम्। स्नानमात्रं सचेलं स्यान्नाशौचं विद्यते क्वचित् "॥ इति।
२० पुत्रपरिग्रहानंतरमौरसपुत्रजनने कनिष्ठोऽप्यौरस एव पित्रादेर्दाहादिकं कुर्यात्।
"औरसे तु समुत्पन्ने दत्तो ज्येष्ठो न चेष्यते। न्यूनोऽपि वयसा पित्रोः कुर्यादेवौरसः सुतः"॥ इति **स्मरणात्**।

**विवाहितस्त्रीविषये पित्राद्याशौचम्**।

पित्रोर्मरणे संस्कृतानां स्त्रीणामाशौचमाह **मनुः**—
२५ " पित्रोरुपरमे स्त्रीणामूढानां तु कथं भवेत्। त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान्यमः "॥ इति। पित्रोर्मृतौ पुत्रीणामूढानां त्रिरात्रेण शुद्धिः। तासां च मृतौ पित्रोस्त्रिरात्रेणैव शुद्धिरित्येवकारार्थः। "त्रिरात्रेणैव तत्पिता" इति **प्रजापति**स्मरणात्। "पुत्र्यास्त्रिरात्रमाशौचं तत्र भोजने च कृते दशाहं भवति" इति **भरद्वाज**स्मरणाच्च त्र्यहविधानं संनिधावेव। "पित्रोः स्वसरि तद्वच्च पक्षिणीं[1] क्षपयेत् निशाम्"। परोक्षे पक्षिणीविधानात्। **संग्रहे**—
३० "परोक्षे पक्षिणी नो चेत्त्र्यहं प्रेतान्नभोजने। दशरात्रं मृतौ पुत्र्याः पित्रोश्चान्योन्यमित्यघम्"॥ इति।

**दौहित्रमातामहाचार्यमातृष्वस्रादिविषयाशौचम्**।

दौहित्रादिमरणे **वृद्धमनुः**—
"संस्थिते पक्षिणीं रात्रिं दौहित्रे भागिने सुते। संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थितः"॥ इति। दौहित्रे भगिनीसुते वा उपनयनसंस्कृते मृते मातामहमातामह्योर्मातृष्वसृमातुलयोश्च त्रिरात्रमाशौचं भवति

१ क्ष—नानंतरं दत्तजत्यन्ये।

उपनयनासंस्कृते कृतचौले पक्षिणी। चौलात्पूर्वं तु भागिनेयादिमरणे मातुलादेः सद्यःशौचस्य **चंद्रिकायामु**क्तत्वात्। पक्षिणीं रात्रिं आगामिवर्त्तमानाहर्युक्तां रात्रिं मातामहादिः क्षपयेदित्यर्थः। एवं स्वस्रीयस्य मृतावपि व्रतात्प्राक् मातृष्वसृमातुलयोः पक्षिणीविधानात् अनुपनीतयोस्तयोर्मृतौ तस्य सद्यःशौचमेवेति ज्ञेयम्। मातामहादीनां मरणे दौहित्रादीनां त्रिरात्रम्।

तथा च **बृहस्पतिः**–" त्र्यहं मातामहाचार्यश्रोत्रियेष्वशुचिर्भवेत् "। आचार्योऽत्रासपिंडः ५ सन्नुपनयादिकर्ता।

" उपनीय तु यः शिष्यं वेदमध्यापयेत् द्विजः। सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते"॥ इत्युक्तलक्षणः। श्रोत्रियस्त्वेकशाखाध्यायी मैत्रीप्रातिवेश्यत्वादिनोपसंपन्नः।

" श्रोत्रियेतूपसंपन्ने त्रिरात्रमशुचिर्भवेत् " इति ( ५।८० ) **मनु**स्मरणात्।

" गृहे यस्य मृतः कश्चिदसपिंडः कथंचन। तस्याप्याशौचं विज्ञेयं त्रिरात्रं नात्र संशयः " ॥ १० इत्यं**गिरः**स्मरणात्। **विष्णुः** ( २२।४१ )—" आचार्यमातामहयोर्व्यतीतौ त्रिरात्रम् " ॥ इति। **आश्वलायनो**ऽपि ( ४४।१९ )—" गुरौ चासपिंडे त्रिरात्रम् " ॥ इति। गुरुरत्राचार्यः। सपिंडो गुरुः पिता। तदुपरमे दशाह एव। यस्तु पिता पुत्रानुत्पाद्य संस्कृत्य वेदार्थं ग्राहयित्वा वृत्तिं च विदधाति तस्य महागुरुत्वात्तदुपरमे द्वादशरात्रं " महागुरौ दानाध्ययने वर्जयेरन् " **इत्याश्वलायनोक्तं** द्रष्टव्यम्। **मनुः** ( ५।७९ )— १५

" त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति। तस्य पुत्रे च पत्न्यां च दिवारात्रमिति स्थितिः " ॥ एतच्च त्रिरात्राशौचं परकर्तृकदाहादौ द्रष्टव्यम्। स्वकर्तृके तु **मनुरेवाह** ( ५।६४ )—

" गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन्। प्रेताहारैः समं तत्र दशरात्रेण शुध्यति " ॥ प्रेताहारैः प्रेतान्नभोजिभिः सपिंडैरिति यावत्। अत्र **चंद्रिकायाम्**—" शिष्ये दशरात्राशौचस्य पितृमेधकर्तृत्वप्रयुक्तत्वात् दौहित्रादावपि पितृमेधकर्तृत्वे दशरात्रं वेदितव्यम् " इति। २० मातृष्वस्रादौ त्रिरात्रमाह **प्रचेताः**—

" मातृष्वसामातुलयोः श्वश्रूश्वशुरयोर्गुरौ। मृते चर्त्विजि याज्ये च त्रिरात्रेण विशुध्यति " ॥ अत्र **चंद्रिकायाम्**-"मातृष्वस्रादिषु वक्ष्यमाणपक्षिण्याशौचविरोधपरिहाराय कश्चिद्विशेषणं कल्प्यम्। तत्र मातृष्वसामातुलयोर्भगिनीसुतसन्निधात्रोः श्वश्रूश्वशुरयोर्जामातृपोषकयोर्गुरौ उपनयनादिकर्तरि ऋत्विजि यजमानकुलक्रमायाते याज्ये च ऋत्विक्कुलक्रमायाते मृते भागिनेयादिस्त्रिरात्रेण शुध्यति" २५ इति। **गौतमः** ( १४।२५ )—" आचार्यतत्पुत्रस्त्रियाज्येषु चैवम् " इति। एवमिति त्रिरात्रातिदेशः। अत्राचार्यपुत्रस्त्रियोर्मरणे त्रिरात्रं तयोरुपकर्तृत्वे सति द्रष्टव्यम्। **बोधायनो**ऽपि— ( १।५।११६ )—" शिष्यसतीर्थ्यसब्रह्मचारिषु त्रिरात्रमहोरात्रमेकाहामिति कुर्वीत " ॥ इति। उपनीयाध्यापितः शिष्यः। तस्य मरणे त्रिरात्रमाचार्यः कुर्वीत। एकस्मादुपाध्यायात्सहाधीतकृत्स्नवेदः सतीर्थ्यः। तस्य मरणे तादितरः सतीर्थ्यः अहोरात्रं कुर्यात्। सहैकदेशाध्यायी सुहृत्सब्रह्म- ३० चारी तस्मिन्मृते तदितरः अहोरात्रमेव कुर्यादित्यर्थः। **स्मृत्यंतरे**—

" मातृष्वसामातुलयोः श्वश्रूश्वशुरयोर्गुरौ। तत्पुत्रस्त्रीषु याज्ये च मृते मातामहं त्र्यहम् " ॥ इति। **व्यासो** विशेषमाह—

**"आशौचं तु त्रिरात्रं स्याच्छ्वश्रूश्वशुरयोर्मृतौ। जीवत्यामेव भार्यायां मृतायां दिवसाच्छुचिः "॥ इति।**

**गौतमस्तु**—

" श्वश्रूश्वशुरनाशात्तु पूर्वं भार्या मृता यदि । तत्संततेः स्यादृपनं त्र्यहमित्याह गौतमः "॥ इति ।

**संग्रहे**—

" श्वश्रूश्वशुरस्वाचार्यतत्पत्नीतत्सुतर्त्विजाम् । याज्यांतेवासिनोर्नाशे त्र्यहमित्याह गौतमः ॥

५ " मातृष्वसृपितृभ्रातृमृतौ तत्प्रतियोगिनः । पुंसस्त्र्यहं मातुलानीमातामह्योर्मृतौ तथा " ॥ इति ।

**अंगिराः**–"मातामहमातुलमातामहीमातुलान्यादीनां त्रिरात्रेण श्वशुरस्य च" इति ॥ **दशकेऽपि**–

" उत्पन्ने त्रिदिनं मृतेऽप्युपनयनादूर्ध्वं समानोदके पुत्रे चैवमनौरसेऽन्यपितृके प्रेते तथा सोदके ॥

"मातृभ्रातृपितृष्वसृश्वशुरतत्पत्न्यर्त्विगाचार्यतद्भार्यातत्सुतयाज्यशिष्यगृहसंप्राप्तेषु च ज्ञातिषु"॥इति ।

यत्तु **वृद्धमनुवचनम्**—

१० "श्वशुरयोश्च भगिन्यां च मातुलान्यां च मातुले । पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम् " ॥ इति

एतत् मातुलान्यादिमृतौ पक्षिणीविधानं स्त्रीविषयम् ।

" मातामहीमातुलानीमातुलानां मृतौ स्त्रियाः । पक्षिणी पुरुषाणां तु त्रिरात्रमघमिष्यते " ॥ इति

**स्मृतेः** । यत्तु **चंद्रिकायामु**क्तम्—

" मातुले श्वशुरे मित्रे गुरौ गुर्वंगनासु च ।आशौचं पक्षिणीं रात्रिं मृता मातामही यदि "॥ इति ।

१५ यदपि **वृद्धवसिष्ठवचनम्**—

" भगिन्यां संस्थितायां तु भ्रातर्यपि च संस्थिते । मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते ॥

"स्यालके तत्सुते चैव सद्यःस्नानेन शुध्यति" इति। अत्र **विज्ञानेश्वरः** (पृ. १८३ पं. २०-२१)–

" तेषु एकविषयगुरुलाघवाशौचप्रतिपादकतया परस्परविरुद्धेषु वचनेषु संनिधिविदेशस्थापेक्षया व्यवस्थानुसंधातव्या " इति । उपकारतारतम्यानुरोधेन व्यवस्था **चंद्रिकायां** प्रदर्शिता ।

२० **राजपुरोहितयोः** परस्परं त्रिरात्रमाह **गालवः**—

" पुरोहिते मृते राज्ञस्त्रिदिनाच्छुद्धिरिष्यते । पुरोहितो मृते राज्ञि त्रिदिनादेव शुध्यति " ॥ इति ।

**पक्षिण्याशौचम्** । पक्षिण्याशौचमाह **मनुः** ( ५।८० )—

" मातुले पाक्षिणीं रात्रीं शिष्यर्त्विग्बांधवेषु च " इति । उभयतोहःपक्षवती रात्रिः पक्षिणी । तथा **चामरः** ( १।४।५ )—" आगामिवर्तमानाहर्युक्तायां निशि पक्षिणी " इति । सा च कालत्रयोप-

२५ लक्षणार्था । तेन अहर्द्वयमध्यगता रात्रिर्वा रात्रिद्वयमध्यगतमहर्वा पक्षिणी । तथा **दीपिकायाम्**–

"पक्षिण्यामुभयाहोभ्यां युक्ता सा पक्षिणी निशा। उपलक्षणमेतत्तु तथा कालत्रयस्य च"॥ इति ।

बांधवा इत्यात्मबंधवो मातृबंधवः पितृबंधवश्चोच्यंते । ते **चंद्रिकायां** दर्शिताः—

" आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः । आत्ममातुलपुत्राश्च विधेया आत्मबान्धवाः ।

" पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः । पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबांधवाः ॥

३० " मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः । मातुर्मातुलपुत्राश्च विज्ञेया मातृबांधवाः " ॥ इति ।

**षडशीतावपि**—

" एवं पित्रोर्भगिन्यौ ये ये पितामहयोस्तथा । ये मातामहयोश्चैव भगिन्यौ तत्प्रजाश्च याः "॥

**एवं चंद्रिकायां विज्ञानेश्वरादिषु**

**आत्मबंधुषु पितृबंधुषु मातृबंधुषु च पक्षिण्याशौचमुक्तम् । पितृमातृबंधुषु शिष्टाः पक्षिणीं नाचरंति ।**

**व्यासः**—" पक्षिणीं योनिसंबंधबांधवेषु त्रिपूरुषम् " इति । **गौतमोऽपि** ( १४।१७–१८ )—

" पक्षिणीमसपिंडयोनिसंबंधे सहाध्यायिनि च " इति । योनिसंबंधोऽत्र त्रिपुरुषविषय एव विवक्षितः । एकयोनिसंबद्धाः कूटस्थैकमिथुनोत्पन्नास्तदुत्पन्नाश्च मातुलमातृष्वसृमातुलेयमातृष्वस्रीय-पितृष्वसृपैतृष्वस्रीयभगिनीभागिनेयादयः कूटस्थसहिताः कूटस्थस्थानीयत्वात्तद्भ्रातृसहिताश्च । तेष्वेकस्मिन्नसपिंडे मृते अन्येषां सर्वेषां पक्षिणी भवतीत्यर्थः । अत्र मातुलमातृष्वसृमातामहीषु ५ पक्षिणीविधानं स्त्रीणामेव । पुरुषाणां तु पूर्वोक्तं त्रिरात्रमेव । **पैठीनसिः**–" मातृष्वसृतत्सुतदुहित्रोः पक्षिणी परस्परम् " इति । **हारीतश्च**—"पित्रोस्तत्सहजयोस्तु पक्षिणी " इति । पित्रोश्च तत्सहजो मातापितृसहजो मातुलमातृष्वसृपितृव्यपितृष्वसृसंज्ञो यो जनस्तस्य य तत्प्रतियोगिनां च मिथः पक्षिणीत्यर्थः । **विज्ञानेश्वरीये**—

"भगिन्यां संस्थितायां तु भ्रातर्यपि च संस्थिते । स्वस्रीये भ्रातृपुत्रे च पक्षिणीं क्षपयेन्निशाम्" ॥ इति । १०

**स्मृत्यंतरे च**—" सोदर्याश्च सुतायाश्च व्यूढायाः पक्षिणी भवेत् " । **अन्यत्रापि**—" पक्षिणी योनिसंबंधेनातिकालेन सूतके " । **मांडव्यः**—

" योनिसंबंधजातानां शृणुध्वमृषिसत्तमाः । मातापित्रोः सोदराणां गुरूणां तत्सुताश्च ये ॥

" पक्षिण्याशौचमेषां तु परस्परमृतिर्यदि । श्वश्रूश्वशुरयोश्चैतत्सूरयः परिचक्षते " ॥

**संग्रहे**— १५

' मातुष्वसृसुतापुत्रौ पितृष्वसृसुतस्त्रियौ । स्वसा पितृव्यपुत्री च स्वसृपुत्री पितृष्वसा ॥

"भ्रातृपुत्री च दौहित्री पौत्री तत्प्रतियोगिनौ । स्त्रीपुंसौ च क्वचित्प्रेते पक्षिण्याशौचिनौ मिथः"॥ इति ।

**संग्रहांतरे**—

" मातामह्यौ पिता माता पितृव्यो मातुलस्तथा । मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा ॥

" मातृष्वसुर्मातुलस्य पितृव्यस्य पितृष्वसुः । पुत्री पुत्रस्नुषा स्वस्य स्वसा भ्राता तदंगना ॥ २०

" स्वसुर्भ्रातुः स्नुषा पुत्रीपुत्रा स्वदुहितापि च । स्वपौत्री च स्वदौहित्री स्वदौहित्रस्तदंगनाः ॥

" अष्टात्रिंशज्जना एते स्त्रीमृतौ पाक्षिणीजुषः । सपिंडान् द्वादशैतेषु मुक्तान्ये पुंमृतौ तथा"॥ इति ।

**अन्यत्र**—

" मातृष्वसा मातुलश्च स्वसा भ्राता पितृष्वसा । पंच तत्तत्सुतापुत्रा दश पौत्रिपितामहाः ॥

" मातामहश्च दौहित्री पितृव्यस्तत्सुतात्मजौ । द्वाविंशतिजनाश्चैते परोक्षे दुहितापिता ॥ २५

" दौहित्रश्च त्रयश्चैते तत्तत्पत्न्यस्त्रयोदश । स्त्रीमृतौ पाक्षिणीभाजे ह्यष्टात्रिंशादिति स्थितिः ॥

" मातृष्वसृपितृष्वस्रोः पुत्रीपुत्राश्च तत्स्त्रियौ । पितृष्वसा स्वसा पुत्री भ्रातृपुत्री स्वसुः सुता ॥

" पितृस्वसृपुत्री दौहित्री मातुलस्य सुतासुतौ । तत्स्त्री चासंनिधौ पुत्री स्वस्रोः पुत्रौ च तत्स्त्रियौ ॥

"क्वचिच्च मातुः पितरौ स्वसा च भ्रातृतत्स्त्रियौ । पक्षिण्याशौचिनस्त्वेते पुंमृतौ पंचविंशतिः "॥ इति ।

तत्तत्पत्न्यः मातृष्वसृपुत्रमातुलतत्पुत्रस्वस्रीयभ्रातृतत्पुत्रपैतृष्वसेयपितामहमातामहपितृव्यतत्पुत्रपितृ- ३० दौहित्रपत्न्य इत्यर्थः । मातृष्वसृपुत्रादीनां पत्नीग्रहणं स्वस्वभर्तरि मृतेऽपि भर्तृप्रतियोगिमरणे तासां पक्षिणीप्राप्त्यर्थम् 'पाक्षिणीमसपिंडे योनिसंबंधे' (१४।१७-१८) इति आ त्रिपुरुषं योनिसंबंध एव **गौतमादिभिः** पक्षिण्याशौचस्योक्तत्वान्मातृष्वस्रादिभर्तृमरणे पाक्षिणी नास्त्येव । बंधुत्वात्स्नानमास्ति । एवं मातृष्वस्रेयादिपत्नीमरणेऽपि नास्ति पक्षिणी । अत एव मातामहीमातुलान्योः पृथग्ग्रहणम् ।

---

१ क्ष–स्वं ।

तथा **चोक्तम्**—

"मातृतः पितृतो येषु विहिता पुंसु पक्षिणी । न तत्पत्नीमृतौ सा स्यात् स्नानमात्रं विधीयते" ॥ इति ।
भर्तृसमानयोगक्षेमत्वात् योनिबन्धुपत्नीनां तु पक्षिणी भवति ।

"एकत्वं सा गता भर्तुः पिण्डे गोत्रेऽथ सूतके" इति **स्मरणात्** । तथा च **संग्रहे**—"भर्तुर्यद्यदघं
५ तत्तत्पत्न्याः स्यान्नास्य पत्न्यघम्" इति । श्वशुरस्यालविषये जामातुर्विशेषस्याभिधानात्
तद्व्यतिरिक्तपत्नीबंधुमरणाशौचं भर्तुर्न स्यादित्यर्थः । सांपर्किकं तु भर्तुराशौचं स्त्रीणां नास्ति ।
"आशौचं यस्य संपर्कादापतेद् गृहमेधिनः । क्रियास्तस्य प्रलुप्यंति गृह्याणां च न तद्भवेत्" ॥ इति
**स्मरणात्** । गृहे भवा गृह्याः । "द्रव्याणि स्त्रीपुत्रादयश्चेति" **विज्ञानेश्वरेण** व्याख्यातम् ।
**भिन्नमातृष्वस्रादिविषयाशौचम्** ।

१० भिन्नमातृष्वस्रादिविषये अहोरात्रमाशौचमाह **अत्रिः**—

"भिन्नमातृष्वसुर्भिन्नपितृष्वसुरहः स्मृतम् । सत्सुतानामथाहश्च मरणे **भृगुर**ब्रवीत्" ॥ इति ।
अत्र भिन्नमातापित्रोरप्यहरिति ग्राह्यम् । तेन भिन्नमातृष्वसृभिन्नपितृष्वसृतत्तत्सुतदुहितृभिन्नमातापितृ-
तत्सुतदुहितॄणामहोरात्रं भवतीत्यर्थः । तथा च **संग्रहे**—

"भिन्नपित्रोः पितृभ्रातृस्वस्रपत्यानि तत्प्रजाः । शुध्यंत्यन्हा मिथः शावे जनास्तत्प्रतियोगिनः" ॥ इति ।
१५ भिन्नपित्रोः जारपितृतत्पत्न्योर्माता पितृभ्रातृस्वसृपुत्रीपुत्राः तत्प्रजाः । तच्छब्देन पित्राद्यपत्यपर्यंता
जनाः परामृश्यंते । प्रजाशब्दः सुतदुहितृवाची । एतेष्वन्यतरस्य मरणे अन्यः दिनेन शुध्यतीत्यर्थः ।
**अन्योऽप्यर्थः** । भिन्नपितृशब्देन सपत्नीमातृभिन्नोदरपितृव्यावुच्येते । पितृव्येऽपि पितृत्वप्रसिद्धेः ।
तेन तत्पितृभ्रातृष्वसृपुत्रीपुत्राः तत्प्रजाश्च दिनेन शुध्यन्तीति । तथा **पारस्करः**—

"या सपत्नीसुता मातृसपत्नी या च ते मिथः । अहोरात्रेण शुध्येतामाह पारस्करो मुनिः" ॥
२० **अत्रात्रेयमपि** योजनीयं "भिन्नमातृष्वसुः" इति । अत्र मातृष्वसुः सपत्नी पितृष्वसुः सपत्नी **च**
भिन्नमातृष्वसा भिन्नभिन्नपितृष्वसा च भवतीति तयोस्तत्सुतानां चाहरित्य**त्रिवचनार्थमन्ये मन्यंते** ।
तथा च **संग्रहे**—

"पुत्र्याः सापत्नकौ चैव स्वसुः सापत्नकौ तथा । मातृष्वसुश्च सापत्नौ सापत्नौ च पितृष्वसुः ॥
"भिन्नमातुश्च पितरौ स्वसा भ्राता तयोर्भवौ । भिन्नमह्योः स्वसापुत्रौ भिन्नमातुः सुतासुतौ ॥
२५ "तयोर्भवौ च स्त्रीमृत्यां षड्विंशतिदिनाघिनः । सपिंडांस्त्रीन् विमुच्यैषु पुंमृतौ च तथा भवेत्" ॥ इति ।
एवं च सपत्न्याः सपत्नीमातृवर्गाशौचं नास्त्येव । बंधुत्वात्स्नानं भवति । भिन्नपित्रोरिति वचनस्या-
र्थान्तरमपि वर्णयन्ति । दत्तस्य प्रतिग्रहीता भिन्नपिता । तत्पत्नी भिन्नमाता । तस्याः पिता भ्राता
स्वसा पुत्री तत्प्रजाश्च प्रतिग्रहीतुः स्वसा तत्प्रजाश्च मिथः दिनेन शुध्यंतीति । दत्तस्य जनन्नीजनक-
रूपपित्रोः पितृभ्रातृस्वसृपत्न्यानां तत्प्रजानां च पक्षिण्याशौचमेव । "पक्षिणीमसपिंडयोनिसंबंधे"
३० इति योनिसंबंधनिबंधनेन पक्षिणीविधानात् ।

तथा च **स्मृत्यन्तरे**—"दत्तस्वसरि स्वस्रीये दत्तभ्रातृसुतास्वपि ॥

"पितृष्वस्रोश्च तत्पुत्रदुहित्रोः पक्षिणीमृतौ । पितृव्ये तद्दुहितरि तत्पुत्रेषु च **पक्षिणी**" ॥ इति ।

**याज्ञवल्क्यः** ( प्रा. २४ )—

"अहस्त्वदत्तकन्यासु बालेषु च विशोधनम् । गुर्वंतेवास्यनूचानमातुलश्रोत्रियेषु च" ॥ इति ।
३५ गुरुरुपाध्यायः ।

"अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः।तमपीह गुरुं विद्यात् श्रुतोपक्रियया तथा"॥इत्युक्तलक्षणः। अंतेवासी शिष्यः।अनूचानो योऽङ्गानां प्रवक्ता। मातुलोऽसंनिहितः। भिन्नोदरमातुलो वा। श्रोत्रिय इह समानग्रामवासी विवक्षितः। "एकाहं सब्रह्मचारिणि समानग्रामीये च" (४।४।२६–२७) **इत्याश्वलायन**स्मरणात्। एकगृहवासिनि तु "श्रोत्रिये तूपसंपन्ने" इति पूर्वोक्तं त्रिरात्रं द्रष्टव्यम्। अश्रोत्रिये स्ववेश्मनि मृते सत्येकरात्रमाह **विष्णुः** (२२।४५) "असपिंडे स्ववेश्मनि मृते ५ एकरात्रम्" इति। **स एव** (२२।४३) "आचार्यपत्नीपुत्रोपाध्यायमातुलश्वशुरश्वश्रूसहाध्यायि-शिष्येष्वेकरात्रेण शुद्धिः" इति। उपाध्यायशब्दार्थः **चंद्रिकायां** दर्शितः—

"एकदेशं तु वेदस्य वेदांगान्यथ वा पुनः। योऽध्यापयति वृत्त्यर्थं स उपाध्याय उच्यते"॥ इति। **वैष्णवे**ऽप्युपाध्यायग्रहणं शास्त्रोपदेष्टॄणां जप्यमंत्रोपदेष्टॄणामाचार्याणामुपलक्षणार्थम्। अत **एव आश्वलायनेन** 'गुरौ चासपिंडे त्रिरात्रम्" इत्यत्रोक्तम्। इतरेष्वाचार्येष्वेकाहमिति॥ १०

"उपनीय तु यः शिष्यं वेदमध्यापयेत् द्विजः। सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते"॥ इति निरूपिताचार्यादितेरेष्वाचार्येष्वित्यर्थः। **स्मृत्यंतरे**—

"सब्रह्मचारिणि प्रेत उपाध्याये तथैव च। श्वशुरस्य सुते चैव अहोरात्रेण शुध्यति"॥ इति। **आश्वलायनः** (४।४।२६)—"एकाहं सब्रह्मचारिणि" इति। **मनुरपि** (५।७०)

"सब्रह्मचारिण्येकाहमतीते क्षपणं स्मृतम्। मातृबंधौ गुरौ मित्रे मंडलाधिपतौ तथा"॥ इति। १५ एतदेकरात्राशौचं महामंडलाधिपतिविषयम्। स्वल्पदेशाधिपतिविषये तु **याज्ञवल्क्यः** (प्रा.२५)–

"निवासराजनि प्रेते तदहः शुद्धिकारणम्" इति। निवासः स्वदेशः। तस्य यो राजा स्वामी स यस्मिन्नहन्यतीतः तदहर्मात्रं शुद्धिकारणम्। रात्रौ चेदतीतः तदा रात्रिमात्रम्। अत एव **मनुः** (५।८२)—"प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितः" इति। ज्योतिषा सह वर्तत इति सज्योतिः। अत्र आशौचम्। अन्हि चेत् यावत् सूर्यदर्शनं रात्रौ २० चेद्यावन्नक्षत्रदर्शनमित्यर्थः। **वृद्धमनुरपि**—

"ग्रामेश्वरे कुलपतौ श्रोत्रिये च तपस्विनि। शिष्ये पंचत्वमापन्ने शुद्धिर्नक्षत्रदर्शनात्"॥ इति। कुलपतिः समूहपतिः। श्रोत्रियादावेककालविधानं असंनिधिविषयम्। **संग्रहे**—

"सब्रह्मचारिण्येकाहं सहाध्यायिनि पक्षिणी। उपाध्यायसुहृत्स्यालभूभृत्सु च मृतेष्वहः॥

"बंधौ स्नानं सगोत्रेऽहर्ज्ञेयं संबंधके मृते"। इति। एकाचार्योपनीतः सब्रह्मचारी। स्यालः २५ पत्नीभ्राता। मातृपक्षे पितृपक्षे च ज्ञायमानसंबंधके बंधुजने मृते स्नानं भवति। सगोत्रे तु तादृग्विधे मृते अहोरात्रमित्यर्थः। **आपस्तंबः** (२।६।१५।२) "मातुश्च योनिसंबंधेभ्यः पितुश्चा सप्तमात्पुरुषात्। यावता वा संबंधो ज्ञायते तेषां प्रेतेषूदकोपस्पर्शनं गर्भान्परिहाप्या परिसंवत्सरान्" इति। अपरिपूर्णसंवत्सरानसपिंडबालान्परिहाप्य वर्जयित्वा ज्ञायमानसंबंधे बंधौ मृते स्नानमित्यर्थः।

**संग्रहे**— ३०

"श्वश्रूश्वशुरतत्पुत्रयाज्याचार्यसुतर्त्विजाम्। उपाध्यायस्य सद्यः स्यात् मृतौ तत्प्रतियोगिनाम्"॥ इति। श्वश्र्वादिप्रतियोगिनां मृतौ श्वश्र्वादीनां सद्यःशौचं स्नानाच्छुद्धिरित्यर्थः। उक्तमसपिंडे त्रिरात्राद्याशौचं सर्ववर्णेषु समानम्। तथा **चंद्रिकायाम्**—

"आशौचमसपिंडेषु प्रोषिते श्रोत्रिये गुरौ। अतीते नृपतौ तद्वदृतुकाले च योषिताम्॥

"अप्रजासु तथा स्त्रीषु मातुले बांधवेषु च। एवमादावाशौचस्य चतुर्णामपि तुल्यता"॥ इति। ३५ अप्रजासु गर्भास्रावादिना नष्टप्रजासु।

**अनेकाशौचसंनिपाते आशौचम्।**

अनेकाशौचसंनिपाते प्रतिनिमित्तं नैमित्तिकावृत्तौ तां निवारयति **पराशरः** (३।३५)—

"अंतरा तु दशाहस्य पुनर्मरणजन्मनी। तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशम्" ॥ इति। यदा दशाहाशौचकालमध्ये तत्तुल्यस्य ततोऽल्पस्य वा निमित्ते जननमरणे स्यातां तदा पूर्वप्रवृत्त-
५ माशौचं यावदनिर्दशं अनिर्गतदशाहं स्याद्विप्रस्तावदेवाशुचिर्भवति न पुनर्मध्योत्पन्नमरणादि-निमित्तदशाहाद्याशौचवानित्यर्थः। **शंखलिखितावपि**—"अथ चेदंतरा प्रमीयेत जायेत वा शिष्टैरेव दिवसैः शुध्येदहःशेषे द्वाभ्यां प्रभाते तिसृभिः" ॥ इति। **याज्ञवल्क्यः** (प्रा. २०)—

"अंतरा जन्ममरणे शेषाहोभिर्विशुध्यति" ॥ इति। **विष्णुरपि** (२२।३४)—"जननाशौच-मध्ये यद्यपरं जननं स्यात्तत्र पूर्वाशौचव्यपगमे शुद्धिः। मरणाशौचमध्ये ज्ञातिमरणेऽप्येवम्" ॥ इति।
१० **गौतमेऽपि** (१४।५।६)—"तच्चेदंतःपुनरापतेत्। शेषेण शुध्येरन्। रात्रिशेषे द्वाभ्यां प्रभाते तिसृभिः"। इति। **चंद्रिकाया**मिदं व्याख्यातम्—संपूर्णाशौचस्यान्त्याहोरात्रमध्ये संपूर्णाशौचा-न्तरस्य यदा संनिपातः तदा द्वितीयाशौचस्य प्रथमाशौचकालशेषेण न शुद्धिः। किंतु तच्छेषा-दूर्ध्वं द्वाभ्यां रात्रिभ्याम् शुद्धिः। यदा तु पुनरष्टमे यामे संपूर्णाशौचांतरसन्निपातस्तदाष्टमयामा-दूर्ध्वं तिसृभी रात्रिभिः" इति। **स्मृत्यंतरेऽपि**—"निशावशेषे द्विदिनात्तदूर्ध्वं यामावशेषे त्रिदिना-
१५ त्प्रयाति" ॥ इति। **शातातपोऽप्याह**—"रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे त्र्यहादिति"। अयं च विशेषः संपूर्णाशौचसंनिपातविषयो द्रष्टव्यः। **यदाह बोधायनः** (१।५।१०४)—

"अथ यदि दश रात्राः संनिपतेयुराद्यं दशरात्रमाशौचमा नवमाद्दिवसात्" इति। आङत्राभि-विधौ। यावन्नवमदिवससमाप्तिस्तावत्पूर्वाशौचकालेन उत्तराशौचां समाप्तिरित्यर्थः। एवं च पूर्वाशौचांत्यदिनेऽपि संनिपतितस्यासंपूर्णस्य द्वितीयाशौचस्य पूर्वाशौचशेषेणैव शुद्धिर्बोद्धव्या।
२० तथा च **धर्मदीपे**—"ब्राह्मणस्य पूर्वाशौचदशमेऽन्हि यदा संपूर्णद्वितीयाशौचप्रक्रमः तदा 'रात्रिशेषे द्वाभ्याम्' इत्ययं विशेष" इति। **देवलोऽपि**—

"पुनः प्राप्तं दशाहात्प्राक् पूर्वेण सह गच्छति। दशमेऽह्नयापतेद्यस्य द्व्याहात्स तु विशुध्यति" ॥ इति।

"प्रभाते तु त्रिरात्रेण दशरात्रेष्वयं विधिः" इति। यदि जननाशौचमध्ये मरणमापतति तदा मरणदिनमारभ्य दशाहाशौचमाहां**गिराः**—

२५ "सूतके मृतकं चेत्स्यान्मृतके त्वथ सूतकम्। तत्राधिकृत्य मृतकं शौचं कुर्यान्न सूतकम्" ॥

**चतुर्विंशतिमतेऽपि**—

"मृतजातकयोर्योगे या शुद्धिः सा तु कथ्यते। मृतेन शुध्यते जातं न मृतं जातकेन तु" ॥

**षट्त्रिंशन्मते**—

"शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत्। शावेन शुध्यते सूतिर्न सूतिः शावशोधनी" ॥ इति।

३० **देवलः**—

"मरणोत्पत्तियोगे तु गरीयो मरणं भवेत्। अघानां सन्निपाते हि शुद्धिर्ज्ञेया गरीयसी" ॥ इति। गरीयस्त्वाच्छावेन समकालस्यापि सूत्याशौचस्य स्वरूपतो लघीयसः शुद्धिरित्यर्थः।

कालतो गुरुणा आशौचेन लघ्वाशौचशुद्धिमाह—

"शावांते शाव आयाते पूर्वाशौचेन शुध्यति। गुरुणा लघु शुध्येत्तु लघुना नैव तद्गुरु" ॥

३५ अल्पकालाशौचमध्ये दीर्घकालाशौचप्राप्तौ दीर्घकालाशौचेन शुद्धिमाह **उशना अपि**—

" स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि । न पूर्वेण विशुद्धिः स्यात्स्वकालेनैव शुध्यति " ॥
**शंखः**—
" समानाशौचसंपाते प्रथमेन समापयेत् । असमानं द्वितीयेन धर्मराजवचो यथा" ॥ द्वितीयमाशौचं प्रथमाशौचकालापेक्षया दीर्घकालत्वेनासमानकालं द्वितीयेन द्वितीयाशौचकालेनैव समापयेदित्यर्थः ॥
**यमोऽपि**—" अघवृद्धिमदाशौचं पश्चिमेन समापयेत् । ५
" यदा त्रिरात्रे प्रक्रांते दशाहं प्रविशेद्यदि । आशौचं पुनरागच्छेत्तत्समाप्य विशुध्यति " ॥ इति । अत्र विशेषो **देवलेनोक्तः**—

" परतः परतोऽशुद्धिरघवृद्धौ विधीयते । स्याच्चेत् पंचमतादन्हः पूर्वेणैव विशिष्यते " ॥
**अस्यार्थः**—"परभूतस्य पूर्वसजातीयस्य विजातीयस्य वा दिनाधिक्येन वृद्धौ परतः शुद्धिः । पराशौचस्य यावान् कालः तस्य सर्वस्यापगमपर्यंतमशुद्धिः । पूर्वाशौचं पराशौचापेक्षया स्वल्पकालमपि १० यदि पंचमादन्हः पंचमदिनात्परतोऽपि कतिपयदिनोपेतं स्यात्तदा पूर्वेण पूर्वाशौचकालशेषेण पराशौचस्यापि शुद्धिर्विशिष्यते विधीयत" इति । **चंद्रिकायाम**प्यस्यार्थोऽभिहितः—उत्तराशौचस्य दीर्घकालत्वेऽपि यदि पूर्वाशौचमुत्तराशौचकालादर्धाधिककालं स्यात्तदा पूर्वेणैवोत्तरस्यापि शुद्धिर्भवति । अत्रोदाहरणम्—

"अधस्तान्नवमान्मासाच्छुद्धिः स्यात्प्रसवे सदा । मृते जीवेऽपि वा तस्मिन्नहोभिर्माससंख्यया" ॥ १५
इति वचनेन सप्तममासप्रसवे सप्तरात्रं अष्टममासप्रसवे अष्टरात्रमुक्तम् । तत्र यदा सप्तरात्राद्याशौचमध्ये दशरात्राशौचं तदार्धाधिकत्वात्पूर्वाशौचशेषेणोत्तराशौचस्य शुद्धिर्भवति । एवमन्यत्राप्युत्तराशौचकालार्धाधिककाले पूर्वाशौचे द्वितीयाशौचस्य तच्छेषेणैव शुद्धिरिति ।

अयमेवार्थः **स्मृतिरत्नमाधवीयाद**ावभिहितः । तत्र चेदमुदाहृतम् । यदा गर्भपातनिमित्ते षडहाशौचे यदि दशाहाशौचमापतेत् तदा षडहाशौचशेषेणैव दशाहाशौचस्यापि निवृत्तिरिति । २० एतदेवाभिप्रेत्य **दशके**ऽप्युक्तम्—"अल्पात्पंचदिनाधिकाद्दशदिनं गच्छेत् " इति । यत्तु कैश्चिदुक्तं कलौ निषिद्धस्य क्रमाशौचस्य प्रतिपादनाद्दुरुक्तिरिति तदविचारितरमणीयम् । क्रमाशौचव्यतिरिक्तस्य पंचदिनाधिकाशौचस्य **चंद्रिकादा**वुक्तत्वात् । **हारीतः**—
"स्वल्पकाले मृताशौचे दीर्घं चेज्जातकं भवेत् । स्वल्पकालेन शुद्धिः स्यान्न दीर्घेण विशुध्यति" ॥ इति ।
**व्यासोऽपि**— २५
"त्रिरात्रमृतमध्ये तु दशाहं जातकं भवेत् । मृताशौचेन शुद्धिः स्यादित्याह भगवान्**यमः**" ॥ इति ।
**मत्स्यपुराणे**—
"जाताशौचस्य मध्ये तु ततो न्यूना मृतिः पतेत् । न तत्र जननाशौचं मृतकेनैव शुध्यति" ॥ इति ।
**षडशीतौ** विशेष उक्तः—
" शावादल्पा समा वाऽपि सूतिः शावेन शुध्यति । स्वभावबहुसूतिस्तु न्यूनशावविशोधनी ॥ ३०
" बहुसंख्यदिनं यत्तु तत्स्वभावबहूच्यते " इति । यथास्वदेशाचारं अत्र व्यवस्था । **संग्रहे**—
" सूतके तत्पुनः स्याच्चेच्छावे यद्वाऽथ सूतकम् । पूर्वेणैवोत्तरं गच्छेन्न शावं सूतकात्क्वचित् ॥
" पूर्वस्यांत्यदिने तच्चेद्‌द्व्यहं पूर्वाघतः परम् । त्र्यहं पूर्वांत्ययामे च तत्प्रभातेऽथ वा यदि ॥
" दीर्घादल्पं व्रजेन्नाल्पाद्दीर्घमित्यवसंगतौ । प्रभातेंऽत्यदिने वाप्तमपैत्यल्पं हि दीर्घतः " ॥ इति ।

**अत्र केचिदाहुः**—" पूर्वेणैवोत्तरं गच्छेत् " इति वचनेन पूर्वमृतिनिमित्ताशौचमध्ये उत्तरमृतिनिमित्ताशौचस्य संनिपाते देशांतरीयस्य वा तस्य श्रवणे पूर्वशेषेण शुद्धिः। न तूत्तरमृतिनिमित्ताशौचमध्ये पूर्वाशौचश्रवणे उत्तराशौचशेषेण शुद्धिः। किंतु अवशिष्टमतिक्रांताशौचमनुष्ठेयमेव। उत्तराघशेषेण पूर्वाघस्य शुध्यभावात्। उत्तरमृतिनिमित्ताशौचमध्ये पूर्वाशौचस्यानतिक्रान्तस्य श्रवणे ५ पूर्वशेषेणोत्तरस्यापि शुद्धिः। पूर्वस्यातिक्रान्तस्य तु दीर्घादिल्पमिति वचनेनोत्तराशौचशेषेण शुद्धिः। आशौचमध्ये आपतितस्याशौचस्य निर्गमानन्तरं श्रवणेन पुनराशौचमनुष्ठेयम्। संनिपाताशौचवचनेषु पुनराशौचपाते शिष्टाहात् शुद्धिविधानात्। यथा स्नानानन्तरस्पृश्यस्पर्शावगमेऽपि तेनैव स्नानेन पूर्वस्यापि शुद्धिरिति। मातापितृमरणाशौचयोरंतिमदिनात्पूर्वमेव मिथः संनिपातेऽपि न प्रथमाशौचशेषेणैव शुद्धिः। यदाह **शंखः**—

१० " मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता। पितुःशेषेण शुद्धिः स्यान्मातुः कुर्याच्चु पाक्षिणीम्" ॥ इति। मात्राशौचमध्ये पित्राशौचसंनिपाते पितृशावेनैव शुद्धिः। पित्राशौचस्य मध्ये मातृशावसंनिपाते तु पूर्वाशौचानन्तरमातृशावाशौचं पाक्षिणीमात्रमनुवर्तेत इत्यर्थः। **षडशीतौ**—

" पूर्वेण चापरेणापि पित्रोः शावेन हीतरत्। आशौचं शुद्धिमायाति न पित्रोः शावमन्यतः॥

" मातुराशौचमध्ये तु पिता च म्रियते यदि। पितुर्मरणमारभ्य पुत्राणां दशरात्रकम्॥

१५ " पितुराशौचमध्ये तु यदि माता प्रमीयते। दशाहात्पैतृकादूर्ध्वं मातृकं पक्षिणी भवेत् "॥

**देवलो** विशेषमाह—

" मृतं पतिमनुव्रज्य पत्नी चेज्ज्वलनं गता। न तत्र पाक्षिणी कार्या पैतृकादेव शुध्यति॥

" पुत्रोऽन्यो वाऽग्निदस्तस्यास्तावदेवाशुचिस्तयोः। नवश्राद्धं सपिंडं च युगपच्च समाप्नुयात्॥

"भर्तुः पित्रादिभिः कुर्यात् भर्त्रा पत्न्यास्तु नैव हि। सापत्न्या वाऽनपत्न्या वा न भेद इति गोभिलः"॥इति।

२० तथा च **गोभिलः**—

" एकचित्यां समारूढौ दंपती निधनं गतौ। एकोद्दिष्टं षोडशं च भर्तुरेकादशेऽहनि॥

" द्वादशेऽहनि संप्राप्ते पिंडमेकं द्वयोः क्षिपेत्। पितामहादिपिंडेषु तं पितुर्विनियोजयेत्" ॥ इति।

**यमः**—

" पत्न्या चैकेन कर्तव्यं सपिंडीकरणं स्त्रियाः। सा मृतापि हि तेनैक्यं गता मंत्राहुतिव्रतैः "॥

२५ **संग्रहे**—" पत्युर्मृताहान्यदिनेऽनुगच्छेद्या स्त्री पतिं चित्यधिरोहणेन।

" दशाहतो भर्तुरघस्य शुद्धिः श्राद्धद्वयं स्यात्पृथगेव काले "॥ **अन्यत्रापि**—

" पूर्वेद्युर्वाऽपरेद्युर्वा भर्तारमनुगच्छति। भर्त्रा सहैव शुद्धिः स्याच्छ्राद्धं चैकदिने भवेत् "॥ इति।

**वसिष्ठो** विशेषमाह—

" अनुयाने तु पतिना सपिंडीकरणं सह। अंतर्धाय तृणं मध्ये भर्तृश्वशुरयोरपि "। इति।

३० अस्यार्थः–पूर्वं भर्तुः पिंडे पित्रादिभिः संयोजिते प्रथमपिंडो भर्तृपिंडो भवति। द्वितीयः श्वशुरपिंडो भवति। तत्र भर्तृश्वशुरपिंडयोर्मध्ये तृणमन्तर्धाय भर्तृपिंडेन स्त्रीपिण्डं योजयेदिति। **स्मृत्यंतरे**–

"मातापित्रोर्मृतौ चैव जनने त्वौरसस्य च। स्वाशौचापगमे नैव शुद्धिः स्यान्नान्यकालतः "। इति सपिंडाघमध्ये पित्रोर्मृतावौरसपुत्रजनने च न सपिंडाघशेषेण शुद्धिः किंतु मातापितृमरणनिमित्तं पुत्रजनननिमित्तं च दशाहमाशौचमनुष्ठेयमित्यर्थः।

**अंगिराः**—"दाहकस्तु दशाहांतः शवदाहं चरेद्यदि । पूर्वेणैव विशुद्धिः स्यात्पित्रोस्तद्दिवसाद्भवेत्"॥
**नारदः**—

"अंतर्दशाहे चेत्कर्तुः पुनः प्रेतस्य संस्कृतिः । तस्माच्छुद्धिः पूर्वशेषादेकोद्दिष्टं यथोदितम् ॥
"पितरौ चेत् दहेत्तत्र दशाहाच्छुद्धिरग्निदे" इति " एकादशेन्हि मध्यान्हे एकोद्दिष्टं विधीयते "॥
इतिवचनात् तत्तदेकादशाह एवैकोद्दिष्टं भवतीत्यर्थः । **हारीतश्च**— ५
" दाहकार्यद्वयं स्याच्चेत्कर्तुरैक्ये विशेषतः । पूर्वेणैव समाप्येत तोयपिंडद्वितीयकम् "॥
तोयपिंडमिति स्वाविनाभूताशौचोपलक्षणम् । **दक्षः**—
" मृताशौचनिमित्ते द्वे दहनं मरणं तथा । ज्ञातीनां मरणादेव दहनाद्दाहकस्य तु ॥
" अन्नं दग्ध्वा दशाहान्तः शुद्धिः पूर्वाघशेषतः " इति ॥ **संग्रहे**—
" पित्रन्यानन्तरानेकान् दग्ध्वा पूर्वाघतः शुचि । पितरौ चेद्दहेत्तत्र दशाहाच्छुद्धिरग्निदे" ॥ इति । १०
**अखंडादर्शे**—"जननमणयोरन्यतरस्मिन्वर्तमाने यदि कश्चिज्जायेत ततस्तु मातापित्रोर्दशाहमेवाशौचं न सपिंडांतरवत्पूर्वकालेनैव शुद्धिः नापि गुरुणा " इति ।
तथा **बोधायनः**—" जननमरणयोः संनिपाते जनने मातापित्रोर्दशाहमाशौचम् " इति ।
**संग्रहे**—"स्वाशौचकालतस्त्वेव सूतिकाजनकोऽग्निदः । शुध्येरन्नघयोगेऽपि न पूर्वाशौचशेषतः"॥
**षडशीतावपि**— १५
"पूर्वाशौचेन या शुद्धिः सूतीनां मृतिनां च सा । सूतिकामग्निदं हित्वा प्रेतस्य च सुतानपि"॥ इति ।
एतदुक्तं भवति । ज्ञात्यघे वर्तमाने यदि प्रसवः स्यात्तदा मातुः सूतिकावधित एव शुद्धिः । पितुर्दशाहेनैव । तत्र ज्ञात्यघमध्ये ज्ञातिदाहे कृते सति दाहकस्य दाहादिदशाहेनैव शुद्धिः । न पूर्वाशौचशेषेण पुनर्ज्ञात्यंतर्दाहे पूर्वदाहादिदशाहशेषेण । पित्रोस्तु दाहे दाहकस्यान्येषामपि पुत्राणां पितृमरणादिदशाहेनैव शुद्धिः । न पूर्वदाहदशाहशेषेणेति । २०
**अज्ञातिदाहाशौचम्**—पक्षिण्याशौचिनां अज्ञातिदाहे विशेषः **स्मर्यते**—
" अज्ञातिं तु नरं दग्ध्वा त्रिरात्रमशुचिर्भवेत् । ज्ञातीनां दर्शनाच्छुद्धिः संचिते दशरात्रकम्"॥ इति ।
अज्ञातिदाहे मुख्यकर्तृदर्शनाभावे उदकदाने सति त्र्यहमाशौचमस्ति । त्र्यहात्परं संचयनात्पूर्वं कर्तृदर्शनानंतरं दाहकर्तुराशौचमुदकमपि नास्ति । संचयनात्परं कर्तृदर्शने तु प्रेतान्नभोजने दशाहपर्यंतमाशौचम् । दशमदिने उदकमप्यस्तीत्यर्थः । **दीपिकायां** तु— २५

" जनकस्य जनन्याश्च भार्याया भर्तुरेव च । पुत्रस्य दुहितुश्चैव जनने मरणेऽपि च ॥
" स्वकालेनैव शुद्धिः स्याच्छेषन्यायो[२] न विद्यते "॥ ज्ञात्यघमध्ये पुत्रजनने पित्रोर्दशाहत एव शुद्धिः । भार्यादिमरणे तत्प्रतियोगिनामपि स्वकालत एव शुद्धिः । न पूर्वशेषेणेत्यर्थः । आशौचमध्ये पुत्रजनने जातकर्मादिकमपि कार्यमेव । यदाह **प्रजापतिः**—
"आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत् । कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुध्यति"॥इति । ३०
पित्रघमध्ये पुत्रजनने पितृमरणाशौचशेषेण पुत्रजन्मनिमित्ताशौचमपि शुध्यतीत्यर्थः ।
तथा च **रत्नावल्याम्**—
"पित्रोर्मृतान्तराले तु स्वभार्या चेत्प्रसूयते । पित्रोः शेषेण शुद्धिः स्यात्पत्न्याः शुद्धिः स्वकालतः"॥इति ।
मातापितृमरणाशौचमध्ये भार्यायाः प्रसवे सति जनकस्य पितृमरणाघशेषेण शुद्धिः । पत्न्यास्तु स्वकालेनैवेत्यर्थः । ३५

१ क्ष–दशाहक । २ ध. सू. १।५।९०. । ३ क्ष–न्यायेन ।

**असंनिहितदेशभवसपिण्डमरणाशौचम् ।**

असंनिहितदेशभवसपिंडमरणाशौचमाह **मनुः** ( ५।७४ )—

" विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम् । यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् " ॥
विगतं मृतं विदेशस्थं असंनिहितदेशस्थं अनिर्दशं अनिर्गतदशाहं दशरात्रस्यांतः स्वजात्युक्तकाला-
५ शौचमध्ये इति यावत् । एतज्जन्माशौचस्यापि प्रदर्शनार्थम् । तथा च **बृहस्पतिः**—

"अन्यदेशे मृतं ज्ञातिं श्रुत्वा पुत्रस्य जन्म वा । अनिर्गतदशाहं तु शेषाहोभिर्विशुध्यति"॥
अन्यदेशे असंनिहितदेशे । पुत्रस्य जन्म ज्ञातेः स्वस्य वाऽपत्यस्य जन्म । **शंखोऽपि**—
"देशांतरगतं श्रुत्वा कल्याणं मरणं तथा । यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत्" ॥ देशांतरगतं
असंनिहितदेशभवं कल्याणं अपत्यजन्मेति यावत् । दशरात्रस्येत्येतत्कालांतरस्याप्युपलक्षणार्थम् ।
१० " यस्य वर्णस्य यः कालो विहितो गुणवत्तया । श्रुत्वा तदंतरेवासौ तच्छेषेणैव शुध्यति " ॥ इति
**स्मरणात्** । **याज्ञवल्क्योऽपि** ( प्रा. २१ )— "प्रोषिते कालशेषः स्यात्" ॥ इति । **संग्रहे**—
" शिष्टाहमेव सर्वेषामपि ज्ञातेंऽतरा त्वघे । प्राक्संचयात्सुतस्येत्थं तदूर्ध्वं दशरात्रकम् " ॥ इति ।
शावे च सूतके चांतरा मध्ये अवगते सति पुत्रव्यतिरिक्तानां सर्वेषामपि सपिंडानां शिष्टाहमेवाघं
भवति । पुत्रस्य तु मुख्यकर्तुरपि अस्थिसंचयनात्प्राक् पित्रोर्मृतिश्रुतौ शिष्टाहमेवाशौचं तदूर्ध्वं
१५ श्रवणदिनादिदशाहमेवेत्यर्थः । तथा च **स्मृत्यंतरे**—
"पित्रोर्मृतौ चेद्दूरस्थः श्रुत्वा तद्दिवसात्परम् । पुत्रः शुध्येत् दशाहेन संचयात्प्राक्तु शेषतः"॥ इति ।
" चतुर्थेऽहनि विप्राणामस्थिसंचयनं स्मृतम् " इत्यस्थिसंचयनस्य चतुर्थदिने कर्तव्यत्वविधानात् ।
'संचयनात्प्राक्तु शेषत' इति संचयेन चतुर्थदिवसस्यैवोपलक्षितत्वाच्च चतुर्थदिनात्पूर्वं पितृमरणस्मृतौ
शिष्टाहं चतुर्थदिवसादि तच्छ्रुतौ दशाहमिति केचित् ।

२० **अतिक्रान्ताशौचम्** । उक्तस्य दशरात्रादिशावाशौचस्यापगमादूर्ध्वं असंनिहितदेशे मृतसापिंडस्यं
मरणवार्ताश्रवणे त्वाह **मनुः** ( ५।७५ )—
" अतिक्रांते दशाहे तु त्रिरात्रमशुचिर्भवेत् । संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुध्यति " ॥
**शंखोऽपि**—
" अतीते दशरात्रे तु त्रिरात्रमशुचिर्भवेत् । तथा संवत्सरेऽतीते स्नात एव विशुध्यति " ॥
२५ **देवलः**—

" आशौचाहःस्वतीतेषु बंधुश्चेच्छ्रूयते मृतः । तत्र त्रिरात्रमाशौचं भवेत्संवत्सरांतरे " ॥
संवत्सरांतरे प्रथमसंवत्सरमध्ये । **चंद्रिकायाम्**—
" अतीते सूतके स्वे स्वे त्रिरात्रं स्यादशौचकम् । संवत्सरे व्यतीते तु सद्यःशौचं विधीयते " ॥
अत्र सूतकशब्दः शावाशौचपरः । **याज्ञवल्क्योऽपि**[1]—
३० " प्रोषिते कालशेषः स्यादशेषे त्र्यहमेव तु । सर्वेषां वत्सरे पूर्णे प्रेते दत्वोदकं शुचिः " ॥ अशेषे
अतिक्रांते दशाहादावित्यर्थः । अत्र **विज्ञानेश्वरः** (पृ.१७९ पं.६-७)—" अयं च त्र्यहो दशाहा-
दूर्ध्वं मासत्रयादर्वाक् द्रष्टव्यः । पूर्वोक्तं तु सद्यःशौचं नवममासादूर्ध्वमर्वाक्संवत्सराद्द्रष्टव्यम् । यत्पुनः
" ऊर्ध्वं दशाहाच्छ्रुत्वा एकरात्रम् " इति **वसिष्ठस्मरणं** तदूर्ध्वं षण्मासेभ्यः यावन्नवमम् । यच्च
श्रुत्वा चोर्ध्वं दशम्याः पक्षिणीमिति तन्मासत्रयादूर्ध्वमर्वाक् षष्ठात् । तथा च **वृद्धवसिष्ठः**—

१ याज्ञवल्कीये न दृश्यते । २१ श्लो. टीकायां मिताक्षरोद्धृतं कस्यचिद्वचनम् (पृ.१७९ पं.१-२)

"मासत्रये त्रिरात्रं स्यात् षण्मासे पक्षिणी तथा । अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुध्यति" ॥ इति ।
**स्मृत्यर्थसारे**— "अतीताशौचं तु स्वाशौचकालादूर्ध्वं ब्राह्मणादीनां सर्वेषां वर्णानामुपनयनादूर्ध्वं स्त्रीणां विवाहादूर्ध्वं भवति । तत्र मासत्रये त्रिरात्रं षण्मासे पक्षिणी नवममासे त्वेकाहं ततः परं सचैलं स्नात्वोदकदानाच्छुद्धिः । अतीताशौचे स्वाशौचकालत्रिभागादूर्ध्वं स्पृश्याः । जन्मन्यतिक्रांताशौचं सपिंडानां नास्त्येव । पुत्रजन्मनि तु पितुः स्नानमस्त्येव " इति । ५

**स्मृतिरत्नमाधवीया**दिषु तु दशाहादूर्ध्वमर्वाक् त्रिपक्षात्रिरात्रं षण्मासादर्वाक्पक्षिणी । अर्वाक्संवत्सरादेकाहम् । यदाह **विष्णुः**—

" अर्वाक् त्रिपक्षात् त्रिदिनं षण्मासाच्च दिवानिशम् । अहः संवत्सरादर्वाक् देशांतरमृतेष्वपि " ॥
अत्र दिवाशब्देन अहर्द्वयमुच्यते । दिवानिशं पक्षिणीति यावत् । तथा च **देवलः**—
"आ त्रिपक्षात् त्रिरात्रं स्यात्षण्मासात्पक्षिणी ततः । परमेकाहमा वर्षादूर्ध्वं स्नानेन शुध्यति "॥ इति । १०
" नीते त्वाशौचे वत्सरांतस्त्वेकरात्रेण " इति **विष्णु**वचनमपि **देवल**समानविषयम् । षण्मासादूर्ध्वं संवत्सरमध्ये एकरात्रेण शुद्धिरिति यावत् । एवं च " मासत्रये त्रिरात्रं स्यात् " इति **वृद्धवसिष्ठ**वचनस्य " अर्वाक् त्रिपक्षात् त्रिदिनं आत्रिपक्षात् त्रिरात्रं स्यात् " इति **विष्णुदेवल**वचनयोश्च निकटदेशतारतम्यापेक्षो विकल्पो द्रष्टव्यः । यत्तु **संग्रहकार**वचनम्—
" त्रिरात्रं त्रिषु मासेषु पक्षिण्येव ततस्त्रिषु । ततोहःषट्स्वथ स्नानं दशरात्रात्यये श्रुतौ " ॥ इति । १५
तत्र प्रमाणं मृग्यम् । न तत्र **देवल**वचनं प्रमाणम् । "आत्रिपक्षात्रिरात्रं स्यात्" इति पठित्वा **स्मृतिरत्नमाधवीया**दिषु व्याख्यातत्वात् । न च " मासत्रये त्रिरात्रं स्यात् " इति **वृद्धवसिष्ठ**वचनं प्रमाणम् । 'अहस्तु नवमादर्वाक्' इत्यस्यांशस्याप्याश्रयणप्रसंगात् । न च ततस्तत एकदेशाश्रयणमुचितम् । अतो विकल्प एव **चंद्रिकायामुक्तः** । भर्तृमरणे पत्न्या दशाहात्परमपि दशाहम् । "दशाहं पुत्रभार्ययोः " इति **वचनात्** । दशाहादूर्ध्वं सोदकमरणश्रवणे त्वाह **मनुः** ( ५।७७ )— २०
"बाले देशांतरस्थे च पृथक्पिण्डे च संस्थिते । सवासा जलमाप्लुत्य सद्य एव विशुध्यति" ॥ इति ।
देशांतरस्थे असंनिहितदेशस्थे बाले षाण्मासिके पृथक्पिंडे सोदके इति यावत् । **गौतमोऽपि** (१४।४१)
" बालदेशांतरितप्रव्रजितासपिंडानां सद्यः शौचम् " इति । **संग्रहे**—

" अत्याशौचं दिनं सद्यस्त्र्यहैकाहरशौचिनोः । पक्षिण्याद्यघिष्वघं तच्छूत्त्वैककालोऽन्यथाप्लवः " ॥ इति ।
स्वस्वाशौचकालेऽतिक्रांते अवगते सति त्र्यहैकाहाशौचिनोः क्रमेण दिनं सद्यःस्नानं पक्षिण्याशौचिनः २५
एककालः रात्रौ श्रवणे रात्रिर्दिवा श्रवणे दिवा अन्यथा दशाहाद्बहिः श्रवणे स्नानमेवेत्यर्थः । अत्र त्र्यहैकाहाशौचिनोरत्याशौचं दिनं सद्य इत्यत्र मूलभूतं प्रमाणं मृग्यम् । यत्तु " ऊर्ध्वं दशाहाच्छ्रुत्वैकरात्रम् " इति **शंख**वचनं प्रमाणमुपन्यस्तं न तत्र त्रिरात्रात्ययाशौचं प्रकृतम् । **विज्ञानेश्वरादिभि**श्चान्यथा व्याख्यातम्—"इदमेकरात्राशौचं सपिंडानामूर्ध्वं षण्मासेभ्यो यावन्नवमं पूर्वोक्तं तु सद्यःशौचं नवममासादूर्ध्वं द्रष्टव्यम्" इति । **चंद्रिकादावपि** "त्रिरात्राद्याशौचिनां कालशेषेण शुद्धिः ३०
कालशेषाभावे सद्यःशौचम्" इति । यत्तु पक्षिणीविषये

"अतीते पक्षिणीकाले दशाहाभ्यंतरश्रुतौ। दिवा वा यदि वा रात्रावेककालेन शुध्यति"॥इति **स्मृत्यंतर**वचनं **संग्रहकारेण** प्रमाणमुक्तं तदपि **चांद्रिकास्मृतिरत्नमाधवीयविज्ञानेश्वरीया**दिनिबंधनेषु **मन्वादिषु** चादर्शनाद्विचारणीयम् ।

तथा **दीपिकायाम्**—

“ मातापित्रोरघेऽतीते श्रुत्वाऽघं दशवासरम् । त्रिरात्रपक्षिण्येकाहेष्वतीतेष्वाप्लवो भवेत् ” ॥ इति ।

**मनुः** ( ५।७६ )—

“ निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च । सवासा जलमाप्लुत्य शुद्धो भवति मानवः ”॥ इति

५ ज्ञातिशब्देनात्रानुपतीत एवोच्यते । उपनीतमरणे “ उपेते विषमं वृत्ते तस्मिन्नेवातिकालजम् ” इति **व्याघ्रेणा**तिक्रांताशौचविधानाद्दशाहादूर्ध्वं पुत्रजन्मश्रवणे पितुरेव स्नानं जन्मनि सपिंडानामत्याशौचं नास्ति । “ नाशौचं प्रसवस्यास्ति व्यतीतेषु दिनेष्वपि ” इति **देवलस्मरणात्** । तथा **संग्रहे**—

“पित्रोर्भ्रातुर्भवेन्नान्येष्वनुपेतात्यये त्वघम् । पितुः स्नानं तदन्येषां न च तत्सूतकात्यये”॥ तस्माच्चोपरि

१० “ गौणमातृमरणं श्रुत्वा सद्यः त्र्यहम् ” इति । गौणमाता सपत्नीमाता ।

भ्रातृविषये **स्मृत्यंतरम्**—

“ भ्रातुर्देशांतरमृतौ षण्मासाद्वत्सरादयः । दशरात्रं त्रिरात्रं स्याद्दशाहं दाहकस्य तु ” ॥ इति । दाहकस्य भ्रातुः । तथा—

“ देशांतरमृतिर्यत्र त्वनुजाग्रजयोर्यदि । षण्मासाद्वत्सराद्वर्वाक् दशाहं त्र्यहमाचरेत् ”॥ इति।

१५ एतदकृतक्रियभ्रातृविषयम् । यदाह **पैठीनसिः**—

“ प्रोषितभ्रातृमरणे दत्तपिंडोदकक्रिये । त्रिरात्रं सूतकं तत्र दशाहं पुत्रभार्ययोः ” ॥ इति । एतच्च त्रिरात्रविधानं षण्मासात्पूर्वं वेदितव्यम् । तथा च **गालवः**—

“ कृतोदके तु षण्मासात्पक्षिणी त्वघमिष्यते । अधश्चेत् त्रिदिनं ग्राह्यमकृते तु दशाह्निकम्”॥ इति । षण्मासादूर्ध्वं भ्रातुरघं पक्षिणीत्यर्थः । **संग्रहे**—

२० “ दशरात्रं सदा पित्रोः परोक्षमरणे श्रुतौ । त्र्यहं मातृसपत्न्यास्तु दशाहं वत्सरादधः ॥

“ कृतौर्ध्वदैहिकेऽत्यब्दे दिनं तस्यास्त्र्यहं तयोः ” ॥ इति । वत्सरमध्ये तत्परं वा मातापितृमरणश्रवणे सर्वेषामपि पुत्राणां दशाहमेव । सपत्नीमातुरसमक्षमृतिश्रवणे वर्षात्परं त्र्यहमेव । तत्पूर्वं तु दशाहम् । अत्र विशेषः । ज्येष्ठेन कृते और्ध्वदेहिके अब्दे चातिक्रांते तस्याः सपत्नीमातुः परोक्षमरणश्रवणे दिनं तयोर्मातापित्रोस्तच्छ्रुतौ कनिष्ठस्य त्र्यहमित्यर्थः ।

२५ पुनःसंस्कारे विशेषः **स्मृत्यर्थसारे** दर्शितः । आहिताग्नौ विदेशस्थे मृते यावद्विधिना न संस्कारस्तावत्तत्पुत्रादीनां मुख्यकर्तॄणां संध्यादिकर्मलोपो नास्ति । शुभकर्म न कर्तव्यम् । अनाहिताग्नेर्विधिवद्दहनाभावे तदानीमाशौचग्रहणं कृताकृतम् । दशाहानंतरं मरणश्रवणे दाहात्पूर्वं त्र्यहाद्याशौचं नास्ति । मुख्यकर्तृसंभवे तदितरज्ञातीनां शुभकर्म च कर्तव्यम् । आहिताग्नेर्विधिवद्दहनाभावे आशौचग्रहणं नास्त्येव । पुनःसंस्कारे दाहाद्याशौचमपि संपूर्णम् । अनाहिताग्नेः

३० पुनःसंस्कारः सूतकमध्ये चेत् शेषदिनात् शुद्धिः । अतीते सूतके पुनः संस्कारश्चेत्पूर्वमगृहीताशौचस्य पुत्रस्य पत्न्याश्च दशाहमाशौचम् । गृहीताशौचयोः पुत्रपत्न्योस्त्रिरात्रम् । पत्न्याः पुनःसंस्कारे पत्युश्चैवं सपत्न्योर्मिथश्चैवम् । गृहीताशौचानां कृतोदकानां पुनराशौचं नास्ति । अकृतोदकानां पुनरेकाहमिति । **बृहस्पतिः**—

“ आशौचे वर्तमाने तु पुनर्दाहक्रिया यदि । तच्छेषेणैव शुद्धिः स्यादतीते सूतकं भवेत् ॥

३५ “ दशाहादि यथावर्णं पित्रोराशौचमाचरेत् । पत्नीनामपि विज्ञेयं दंपत्योश्च परस्परम् ॥

“ सपिंडानां त्रिरात्रं स्यादित्युवाच प्रजापतिः ” ॥ इति ।

---

१ क्ष—अनिर्दशं ।

**स्मृत्यंतरेऽपि—**

" आशौचांतः कीकसादेः प्रदाहे शेषाच्छुद्धिस्तद्बहिश्चेत् त्रिरात्रम्।
" पुत्रस्यापि प्रागघस्य ग्रहश्चेन्नो चेत्तस्याप्यत्र संपूर्णमाहुः " ॥ इति। कीकसं अस्थि।
**पारस्करः**—"आशौचे वर्तमाने तु तच्छेषेण विशुध्यति। गते त्वाशौचसमये पुनर्दाहो यदा भवेत्।
" मरणादि गृहीतस्य त्रिरात्राच्छुद्धिरिष्यते। अगृहीतस्य पुत्रस्य संपूर्णाशौचमेव हि " ॥ इति। ५
अगृहीताशौचविषये **देवलः**—
"दग्ध्वास्थि पित्रोः पुत्रस्तु दशाहमशुचिर्भवेत्। तयोः प्रतिकृतिं दग्ध्वा शाववच्छौचमिष्यते " ॥ इति।
शाववद्दशाहमित्यर्थः। **स्मृत्यंतरेऽपि**—
" अस्थ्ना पलाशवृंतैर्वा दग्ध्वा तु प्रतिरूपकम्। पित्रोर्दशाहमाशौचमन्येषां तु त्रिरात्रकम् " ॥ इति।
**तथा**— १०
" संस्कृताग्नौ दहेत्पश्चाद्दशरात्रं तु सूतकम्। इतरेषां त्रिरात्रं स्याद् ज्ञातीनामपि सूतकम् " ॥ इति।
यत्तु **स्मृत्यंतरवचनम्**—
"दग्ध्वास्थि पित्रोः पुत्रस्तु दशाहं सूतकी भवेत्। तयोः प्रतिकृतिं कृत्वा त्रिरात्रमशुचिर्भवेत्" ॥ इति।
अत्रास्थिदाहे पुत्रस्य दशाहविधानं अगृहीताशौचविषयम्। प्रतिकृतिदाहे त्रिरात्रविधानं गृहीताशौचविषयम्। अन्ये तु पुत्रस्य गृहीताशौचस्यास्थिदाहे दशाहं प्रतिकृतिदाहे त्रिरात्रमिति १५
व्याचक्षते। अगृहीताशौचविषये चोदाहरंति **स्मृत्यंतरम्**—
" नरं पर्णमयं दग्ध्वा त्रिरात्रमशुचिर्भवेत्। मातापित्रोर्दशाहं स्यादास्थिदाहे तथैव च " ॥
प्रागघग्रहणाभावे पर्णनरदाहे सपिंडानां त्र्यहं मातापित्रोस्तादृग्विधदाहे अस्थिदाहे सपिंडानां च
दशाहमिति च ते व्याकुर्वत। तथा च **संग्रहकारः**—
" यज्वायज्वपुनर्दाहे शिष्टाहं यद्यघाद्बहिः। दशाहं त्र्यहमाशौचं पूर्णं प्राक् चेदघाग्रहः ॥ २०
" अस्थिदाहे प्रतिकृतेर्दाहे तु त्र्यहमित्यघम्। सपिंडानां सुतानां तु दशरात्रमिहेष्यते " ॥ इति।
दशाहमध्ये आहिताग्न्यनाहिताग्न्योः पुनःसंस्कारे कृते सति संस्कारदिनादूर्ध्वं दशरात्रावशिष्टमेवाघं भवति। न पुनर्दाहादिदशाहं। यदि दशाहाद्बहिर्यज्वायज्वपुनर्दाहः स्यात्तत्र दशाहं त्र्यहमिति क्रमेणाघं स्यात्प्रागघग्रहणाभावे अस्थिदाहे पूर्णम्। प्रतिकृतिदाहे तु सपिण्डानां त्र्यहमेव।
पुत्राणां तु प्रतिकृतिदाहेऽपि प्रागाशौचग्रहणाभावे दशाहमेव। तद्ग्रहणेऽपि पितृविषयेऽस्थिदाहे २५
सदा दशाहमिति **संग्रहकारवचनं** तैर्व्याख्यातम्। अपरे तु ज्ञातीनामगृहीताशौचानां पर्णदाहवदस्थिदाहेऽपि त्रिरात्रमेव। गृहीताशौचस्य पुत्रस्य पर्णदाहेऽस्थिदाहेऽपि त्रिरात्रमेव। "आशौचांतः कीकसादेः प्रदाहे" इत्यादीनां पूर्वोक्तानां वचनानां पुनर्दाहमात्रविषयत्वेन प्रवृत्तत्वात्। "मातापित्रोर्दशाहं स्यादास्थिदाहे तथैव च" इत्यस्य च मातापितृविषये अगृहीताशौचस्य पुत्रस्य पर्णदाहवदस्थिदाहेऽपि दशाहाशौचप्रतिपादकत्वात्तत्र सपिंडविषयत्वात्प्रतीतेरित्याहुः। तथा च **संग्रहे**— ३०
" अंतर्दशाहदाहे तु शेषतः शुचयोऽखिलाः। बहिर्दशाहदाहे तु दाहादित्रिदिनं मतम् ॥
" प्रागाशौचग्रहाभावे ज्ञातीनां त्रिदिनं समम्। प्राग्ग्रहे तु त्र्यहं कर्तुरन्येषां तु न विद्यते।
" कर्ता च तनयः पूर्वग्रहे पूर्णं तथा दिनम् " ॥ इति। **पुराणमपि**—
" अस्थ्यभावे पलाशोत्थैः पर्णैः कार्यं शरीरकम्। तथा पर्णमयं दग्ध्वा त्रिरात्रमशुचिर्भवेत् " ॥
इत्येतत् गृहीताशौचपुत्रविषयम्। गृहीताशौचज्ञातीनां तु नाशौचम्। तथा च **स्मृत्यंतरे**— ३५

" पुत्रः पित्रोस्तु संस्कारं प्रमादान्न करोति चेत्। ज्ञातीनां दशरात्रं स्यात्तदूर्ध्वं सूतकं न हि॥
" नित्यकर्माणि कुर्वीत स्मृत्युक्तानि तथैव च "॥ इति। **अन्यत्रापि**—
" वंशजानामसंस्कारे सूतकं तु कथं भवेत्। दशाहात्परतः शुद्धिर्ज्ञातीनां च विशेषतः"॥ इति।
एतेन दहनमन्तरेणाप्याशौचमुदकदानं चानुष्ठेयमित्युक्तं भवति।

५ पुत्रस्यापि पुनर्दहनात्पूर्वमाशौचानुष्ठानमाह **वसिष्ठः**—
" प्रमीतपितृकः पित्रोरोर्ध्वदैहिकमाचरेत्। यदि कर्तुमशक्तः स्यादाशौचं नियमान्वितः॥
" आ दशाहादयोर्ध्वं तु यदा कार्यक्षमस्तदा। त्रिरात्रं समतिक्रम्य श्राद्धं कुर्याद्यथाविधि॥
" दाहकस्य तदा शौचमितरेषां न विद्यते "॥ इति। इतरेषां दत्तोदकसपिंडानामित्यर्थः।
गृहीताशौचानामदत्तोदकानां तु सपिंडानामुदकनिमित्तमाशौचमुक्तं **स्मृत्यंतरे**—
१० " पूर्वं गृहीताशौचानां न पुनर्दहने त्वघम्। तस्मिन्नुदकदातॄणामाशौचं मनुरब्रवीत्"॥ इति।
" मरणादिगृहीतस्य त्रिरात्राच्छुद्धिरिष्यते " इति पुत्रस्य त्रिरात्राशौचविधानात् ज्ञातीनामेकरात्रं न्यायसिद्धमिति **व्याख्यातारः**। आहिताग्नेर्मंत्रवद्दहनाभावे पुत्रादीनामाशौचं नास्ति। किंतु पुनर्दाहसमय एवाशौचमित्युक्तं **चंद्रिकायाम्**—
" आहिताग्नेस्तु विधिवद्दाहांतं नास्ति चेत्तदा। आशौचग्रहणं नास्ति दाहाद्याशौचमिष्यते "॥ इति।
१५ दाहाद्याशौचम् पुनर्दाहाद्याशौचम्। तच्च दशाहम्। तथा **पारस्करः**—
" आहिताग्नेस्तु दहनात् दशाहाशौचमिष्यते " इति। आहिताग्नेरपि—
" विदेशस्थो गृही यावद्विधिना नैव संस्कृतः। पुत्रादीनां तु सन्ध्यादि कर्मलोपो न विद्यते "॥
**पैठीनसिरपि**— " आहिताग्निश्चेत्प्रवसन्म्रियेत पुनःसंस्कारं कृत्वा शावमाशौचमिष्यते " इति।
**स्मृत्यंतरेऽपि**—
२० " दशाहांतं सपिंडानां मृतौ प्रेतक्रिया भवेत्। पुनः संस्कारे त्रिरात्रं स्याद्यष्टुः पित्रोर्दशाहतः"॥ इति।
अनाहिताग्नेः पुनःसंस्कारे सपिंडानां त्रिरात्रम्। यष्टुः आहिताग्नेः पुनःसंस्कारे सपिंडानां दशाहं। पित्रोश्च पुनःसंस्कारे पुत्राणां दशाहमित्यर्थः। अनेकसपिंडपुनर्दाहे **संग्रहकारः**—
" मृतानां तु सपिंडानां काले बहुतिथे गते। तान्सर्वान्सह संस्कुर्यात् त्रिरात्रेण यथाविधि॥
"एकोद्दिष्टं चतुर्थेऽन्हि तेषां पिंडं पृथक् पृथक्। सपिंडीकरणं तेषां सहैव पृथगेव वा "॥ इति।
२५ अब्दात्परं दुर्मृतसपिंडादिपुनर्दाहविषये **गर्गः**—
"अतीतेऽब्दे तु संस्कारे एकाहात्पिंडमर्पयेत्। श्राद्धं दद्यात् द्वितीयेऽन्हि तृतीयेऽह्नि सपिंडनम्"॥ इति।
मातापितृविषये तु त्रिरात्रम्।
" अब्दांते वाऽथ षण्मासे पुनः कृत्वा तु संस्कृतिम्। त्रिरात्रमशुचिर्भूत्वा श्राद्धं कुर्याच्चतुर्दिने"॥ इति
**स्मरणात्**—अयमत्र निष्कर्षः। आहिताग्नेः पुनर्दाहाद्येव पुत्रादीनामाशौचं न ततः पूर्वम्। अना-
३० हिताग्नेस्तु पुनर्दाहात्पूर्वमाशौचग्रहणं विकल्पितम्। आहिताग्न्यनाहिताग्न्योर्दशाहमध्ये पुनर्दाहेऽपि[1] शिष्टाहमेवाघम्। दशाहात्परमाहिताग्नेः पुनर्दाहे पुत्रस्य सपिंडानां च दशाहम्। अनाहिताग्नेः पुनरस्थिदाहे प्रतिकृतिदाहे च पूर्वमगृहीताशौचस्य पुत्रस्य दशाहम्। गृहीताशौचस्य तु त्रिरात्रम्। अस्थिदाहे प्रतिकृतिदाहे चागृहीताशौचानां ज्ञातीनां त्रिरात्रं गृहीताशौचानामदत्तोदकानामुदकदाननिमित्तमेकरात्रम्। दत्तोदकानां तु न किंचित्।

---

१ खग-वि।

अन्ये तु अस्थिदाहे पुत्राणां गृहीताशौचानामपि दशाहम् । प्रतिकृतिदशाहे त्रिरात्रम्। सपिंडानामप्यगृहीताशौचानामस्थिदाहे दशाहम् । गृहीताशौचानां तु त्रिरात्रमित्याहुः । अनेकसपिंडपुनर्दाहे त्रिरात्रमब्दानंतरमेकस्यानेकस्य वा पुनर्दाहे एकरात्रम् । मातापितृविषये तु त्रिरात्रमिति। सपिंडसमानोदकादीनामुक्तमिदं दशरात्रं त्रिरात्राद्याशौचमाहिताग्नेस्तत्पत्न्याश्चोपरमे संस्कारदिवसप्रभृति अनाहिताग्नेर्मरणदिवसप्रभृति । उभयोरपि संचयनं दाहाद्द्वितीयादिदिवसे कार्यम् । ५ यथाहांगिराः—

"अनग्निमत उत्क्रांते साग्नेः संस्कारकर्मणः। शुद्धिः संचयनं दाहान्मृताहस्तु यथातिथिम्" ॥ इति। अत्र **विज्ञानेश्वरः** (पृ. १७८ पं. ४–५) "साग्नेः संस्कारकर्मण" इति श्रवणादाहिताग्नौ पितरि देशांतरमृते तत्पुत्राणामा संस्कारात्संध्यादिकर्मलोपो नास्तीत्यनुसंध्येयम् । यथाह **पैठीनसिः**— "अनग्निमत उत्क्रांतेराशौचं हि द्विजातिषु । दशाहादग्निमतो विद्याद्विदेशस्थे मृते सति "॥ इति। १० **स एव**—"आहिताग्निश्चेत्प्रवसन्म्रियेत पुनःसंस्कारं कृत्वा शाववच्छौचम् " इति । संनिहितदेशमरणे तु दाहादिदशाहसत्त्वेऽपि मरणाद्याशौचमस्ति। "सूतकं तु प्रवक्ष्यामि मृतजन्मनिमित्तकम्" इति **दक्षस्मरणात्** । **स्मृत्यंतरे**—

" अनग्नेर्मरणात्साग्नेराशौचं दाहतः परम् । तयोः संचयनं दाहान्मृताहस्तु तिथिः स्मृता " ॥ इति । अनाहिताग्नेर्मरणाद्यपि संचयनमुक्तं **ब्रह्मपुराणे**— १५

" अनाहिताग्नेर्मरणादाहिताग्नेस्तु दाहतः । अस्थिसंचयनं कुर्यात् स्वशाखोक्तविधानतः " ॥ इत्यत्राचारतो व्यवस्था । **तत्रैव**—

"दाहाद्यशौचं विज्ञेयं सर्वेषामग्निहोत्रिणाम्। मरणाद्येव कार्यं स्यात्संयोगो यस्य नाग्निभिः" ॥ इति। **व्याघ्रोऽपि**—" दहनाद्येव कार्यं स्याद्यस्य वैतानिको विधिः " इति ।

अत्र **केचिदाहुः**—'यस्य वैतानिको विधिः' इति स्मरणात् आहिताग्नेस्तत्पत्न्याश्च २० वैताग्निना संस्कारे सति दाहाद्याशौचम् । तदभावे " संयोगो यस्य नाग्निभिः " इति वचनात् मरणाद्येवानाहिताग्निमरणवदाशौचमिति ।

अन्ये तु उक्तयोर्वचनयोराहिताग्न्यनाहिताग्न्युपलक्षणत्वेन वैतानिकाग्निसंस्काराभावेऽप्याहिताग्नेस्तत्पत्न्याश्च मरणे दहनाद्येवानाहिताग्निमरणवदाशौचमित्याहुः। शिष्टाचारादिह व्यवस्था।

**रात्रौ जन्मर्तुमृतिसंभवे दिननिर्णयः** । रात्रौ जन्मादिसंभवे अर्धरात्रात्परं जन्मादौ सति २५ परदिनं पूर्वे तदुत्पत्तौ पूर्वदिनमित्येकः कल्पः। रात्रिं त्रेधा विभज्याद्ये भागद्वये जननादौ जाते पूर्वदिनं ग्राह्यम् । उत्तरभागे परदिनमिति द्वितीयः। प्रागुदयादित्यपरः कल्पः ॥

तथा **विज्ञानेश्वरीये** ( पृ. १४४ पं. ३१–३३ )—

" अर्धरात्रावधिः कालः सूतकादौ विधीयते ॥

" रात्रिं कुर्यात् त्रिभागं तु द्वौ भागौ पूर्व एव तु। उत्तरांशः प्रभातेन युज्यते मृतसूतके ॥ ३०

" ऋतौ च सूतके शावे तृतीयांशः परान्वितः। आद्यौ द्वावंशकौ युक्तौ पूर्वेणाह्नेति निश्चयः॥

" उदिते तु यदा सूर्ये नारीणां दृश्यते रजः। जननं वा विपत्तिर्वा यस्याहस्तस्य शर्वरी॥

" रात्रावेव समुत्पन्ने मृते रजसि सूतके। पूर्वमेव दिनं ग्राह्यं यावन्नाभ्युदितो रविः " ॥

एतेषां च कल्पानां देशाचारेण व्यवस्था इति ।

अत एव स्वदेशाचारानुसारिणा **तुण्डीरमंडलीयेन संगृहीतम्**—

" त्रियामायास्तृतीयांशे यदि जन्मर्तुमृत्यवः । प्रभातादि यदि ध्यंशे पूर्वाह्वाद्यघमिष्यते " ॥ इति । पादोनचतुर्नाडिकारूपसंध्याकालरहिता रात्रिस्त्रियामा । **अत्राहुः**—

" तृतीयभागे संप्राप्ते मलं स्यान्निशि चेत्त्रियाः । प्रभातादित्रिरात्रेण शुद्धिं तस्या विनिर्दिशेत् ॥

५ " प्रत्यूषे जन्ममरणे स्यातां यदि परं दिनम् " ॥ इति **वृद्धपराशरस्मरणात्** ।

"रात्रिं कुर्यात् त्रिभागं तु" इत्यादिवचनानि रजोमात्रविषयतया संकोचनीयानि । जन्ममरणयोस्तु अरुणोदयाद्येव दिनं ग्राह्यमिति । केचित्तु—

" सूतके मृतके चैव यदघं परिकीर्तितम् । ते चेत् सूर्योदयादर्वाग् दिनमेकं तु तद्भवेत् " ॥ इति । **वचनात्**—जन्ममरणयोरुदयाद्येव दिनं ग्राह्यमित्याहुः ।

१० **संपर्काशौचमुक्तं स्मृतिरत्ने**—

" संपर्कमशनं पानं दशरात्रं विवर्जयेत् । तत्संपर्काद्भवेदेनः शुद्धस्यापि न संशयः " ॥ इति । एनः आशौचम् । संपर्कशब्दार्थ उक्तः **स्मृत्यंतरे**—

" प्रेतकर्मोपदेशित्वं तत्कृतिश्चाघिभिः सह । सहवासः सपत्न्यादिसंपर्कार्थं प्रचक्षते " ॥ इति । अत्र **बृहस्पतिः**—

१५ " यस्तैः सह सपिंडोऽपि प्रकुर्याच्छयनादिकम् । बांधवोऽबांधवो वाऽपि स दशाहेन शुध्यति" ॥ इति । दशाहोपन्यासो दशाहसंपर्कविषयः । यस्मिन् यस्मिन्दिने संपर्कस्तद्दिनमात्रमघं भवति ॥ कादाचित्कस्पर्शे स्नानमात्रेण शुद्धिः । **स्मृत्यंतरे**—

" प्रेतकर्मणि वक्तृणामाशौचं कर्तृवद्भवेत् । अन्यकर्मणि वक्तृणां स्वाहाकारं विनोच्यते " ॥ इति ।

संपर्कनिमित्ताशौचे विशेष उक्तः **संग्रहे**—

२० "अघिसंपर्कतोऽशौचं भवेत्तद्दिनसंख्यकम् । न तत् द्रव्यक्रिया स्त्रीणां सांपर्किकमघं भवेत्" ॥ इति । अतीताशौचविषयेऽपि क्रियाद्रव्येष्वाशौचाभावोऽतिदिष्ट**स्तत्रैव**—

" तथा नैव क्रिया द्रव्येष्वतीतं त्रिदिनाद्यघम् " इति । **अत्रांगिराः**—

"अतिक्रांते दशाहे तु पश्चाज्जानाति चेद् गृही । त्रिरात्रं सूतकं तस्य न तत् द्रव्यस्य कर्हिचित्" ॥ अत्र द्रव्यमात्राशौचाभावोक्त्या स्त्रीणां क्रियायाश्चातीताशौचमस्तीत्यवगम्यते । यत्तु क्रियासाधना-

२५ भूतद्रव्यस्याशौचाभावोक्त्या तत्साध्यक्रियाणामप्याशौचाभावः सिध्यतीति तन्न । कर्तुराशौचित्वेन कर्मानविकारत्वात्स्वद्रव्यसाध्यान्यकर्तृकक्रियाया आशौचाभावप्रतिपादनं आशौचिद्रव्यस्याशौचा-भावोक्त्यैव गतार्थत्वात् अन्यदीयक्रियाया आशौचभाववचनं मुधैव स्यात् ।

अत एव **विज्ञानेश्वरा**दिभिर्गृहे भवानां भार्यादीनां द्रव्याणां च संपर्काशौचाभावः द्रवस्य त्रिरात्राद्यतिक्रांताशौचाभावश्चोक्तः । **अंगिराश्च**—

३० " आशौचं यस्य संसर्गादापतेद्गृहमेधिनः । क्रियास्तस्य विलुप्यंते श्राद्धाणां च न तद्भवेत् "॥ इति । गृहमेधिनः क्रियालोपस्तद्गृहे भवानां भार्यादीनां द्रव्याणामप्याशौचाभावश्च कण्ठरवेणोक्तः । एवं च संपर्काशौचविषये अतीताशौचविषये च क्रियायामाशौचाभावप्रतिपादक**संग्रह**कारवचने प्रमाणं चिन्त्यम् ।

**अन्तःशवग्रामविषये मनुः**—

३५ "नाद्यादंतःशवे ग्रामे नाधीयान्न जुहोति च । तानि विध्यंतरे कुर्याद्धनुरेकादशांतरे"॥ इति ।

---

१ ग–सपत्न्यादि ।

वितस्तिर्द्विगुणारत्निस्तस्मात्किष्कुस्ततो धनुः इति उक्तलक्षणैरेकादशभिर्धनुर्भिर्व्यवहिते विध्यंतरे कुर्यादित्यर्थः । **आपस्तंबः** (१।३।९।१४–१५)— " अंतःशवमंतश्चांडालम् " इति ।

**स्मृत्यंतरे**—

" ग्रामस्थे शवचंडाले शूद्राद्यशुचिसन्निधौ । नाध्येतव्यं न भोक्तव्यं न होतव्यं कदाचन " ॥ इति ।

**आत्रेयोऽपि**— ५

" अंतःशवो यदा ग्रामस्तस्मिन् ग्रामे तदालये । नित्यं नैमित्तिकं काम्यं न कुर्यादिति शासनम् ॥

" श्रुतिस्मृत्योर्विरोधे तु श्रुतिरेव बलीयसी । तस्मादंतःशवे ग्रामे जुहुयाच्छ्रौतपावकम् " ॥ इति ।

**स्मृत्यंतरे** विशेषो दर्शितः—

" चतुःशताधिकैर्विप्रैः संपूर्णे ग्राममध्यके । विशेषं संप्रवक्ष्यामि जपहोमार्चनं प्रति ॥

" अंतःशवस्य दोषस्तु नास्ति तत्र समाचरेत् । ग्रामे नाराचविच्छिन्ने कुर्याद्भिन्नोऽथवा पथा ॥ १०

" वीथ्यंतरे वा मृतके हरेरर्चा समाचरेत् ।

" अनाथानुपनीतानां प्रेतायाश्च तथा स्त्रियाः । अंतःशवस्य दोषस्तु ग्रामादौ तु न लिप्यते ॥

" मुनीनां च यतीनां च परकायप्रवेशिनाम् । मरणं यत्र संभूतं तत्र दोषो न लिप्यते ॥

" शूद्रादीनां च मरणं संभवेद्यत्रकुत्रचित् । आशौचं गृहमात्रस्य ग्रामाशौचं न विद्यते ॥

" कुटिके पतने चैव खर्वटे राजधानिषु । क्रमेणैवार्चनं कुर्यादुक्तदोषो न विद्यते " ॥ इति । १५

**संग्रहे**—

" अंतःशवोऽशुचिर्ग्रामस्तत्र होमादि नाचरेत्[1] । वीथ्यंतरे सदा कुर्यादेकादशधनुष्परे ॥

" ग्रामे चतुःशतब्रह्मयुक्तेऽप्यंतःशवे क्रियाः । कुर्यात्स्त्रीवृषलानाथबालार्तौ चेत्यथापरे " ॥ इति ।

चतुःशतब्राह्मणयुक्ते ग्रामे एकादशधनुर्व्यवहितत्वाभावेऽपि कुर्यादेव ।

" सहस्रविप्रसंपूर्णे ग्रामे तदधिकेऽपि वा । आलयस्य समीपे तु त्रिंशद्दंडांतरे मृतौ ॥ २०

" अर्चनस्थापनादीनि न कुर्यादेव तत्र तु ॥

" एकवीथ्यां समारूढे एकविंशद्गृहे स्थिते । त्रिंशद्धनुषि चाधस्त्ये दैवं पित्र्यं च वर्जयेत् ॥

" पंचाशच्चापि सीमांते वैकवीथ्यां शवे सति । अर्चनं च हरेर्दानं जपहोमादि वर्जयेत् " ॥ इति

**स्मरणात्** । **स्मृत्यंतरे**—

" प्रतिष्ठादिषु कालेषु यस्मिन्ग्रामे मृतिर्भवेत् । शीघ्रं बहिः शवं नीत्वा कर्मशेषं समापयेत् ॥ २५

" अग्रहारे हरेः पूजा वर्तते यत्र कुत्रचित् । अंतःशवं यदि भवेत्तदा नीत्वा ततो बहिः ।

" तच्छवं भस्मसाद्यावत्तावत्तंत्रेण पूजयेत् " ॥ इति

**संवर्तः**—" पाकयज्ञं तथा भुक्तिं जलाहरणमेव च । न कुर्यात्तावता विप्रो यावत्तिष्ठेच्छवोत्तरा ॥

" अज्ञानाद्यदि भुंजीत प्रायश्चित्तं समाचरेत् " ॥ इति ।

**अनुगमनाशौचम्** । अनुगमनाशौचमाह **पराशरः** ( ३।४८ )— ३०

" अनुगम्येच्छया प्रेतमज्ञातिं बंधुमेव वा । स्नात्वा सचैलं स्पृष्ट्वाऽग्निं घृतं प्राश्य विशुध्यति " ॥ इति ।

ज्ञातयो मातृसपिंडाः । इतरेषां तु विहितत्वान्न दोषः ।

---

१ क्ष–नाचारन् ।

**याज्ञवल्क्योऽपि** ( प्रा. २६ )—

"ब्राह्मणेनानुगंतव्यो न शूद्रो न द्विजः क्वचित्।अनुगम्यांभसि स्नात्वा स्पृष्ट्वाऽग्निं घृतभुक् शुचिः"॥इति । द्विजः विप्रादिः ।। शूद्रो वा नानुगंतव्यः । यदि स्नेहादिना ब्राह्मणः समानोत्कृष्टजातिं प्रेतमनुगच्छति तदा स्नानाग्निस्पर्शघृतप्राशनानि कुर्यादित्यर्थः । **कवषो** विशेषमाह—

५ "अनुगम्य शवं बुध्या स्नात्वा स्पृष्ट्वा हुताशनम्। सर्पिः प्राश्य पुनः स्नात्वा प्राणायामैर्विशुध्यति."॥ इति । प्राणायामाश्च त्रयः ।

**पुनःस्नानम्** । पुनःस्नानस्वरूपमाह **हारीतः**—

" आर्द्रवस्त्रं परित्यज्य शुष्कवस्त्रेण मज्जनम् । शवानुगमने क्षौरे पुनःस्नानं विधीयते "॥ इति । अनुगमने एवेदं प्रायश्चित्तं नाग्रे पार्श्वयोर्वा गमने ।

१० " प्रेतस्य पार्श्वयोरग्रे न गंतव्यं कदाचन । तस्मादग्रे तु गंतॄणामायुः क्षीणं पदेपदे ॥

"मृतस्य पश्चाद्गमने प्रायश्चित्तं विधीयते । किल्बिषादग्रगमने निष्कृतिर्नोपपद्यते"॥ इति **स्मरणात्** । घृताद्यसंभवे विशेषः **स्मृत्यंतरे** दर्शितः—

" अग्न्यभावे घृताभावे सचैलं स्नानमाचरेत् । सव्याहृत्या च गायत्र्या दश कृत्वोऽभिमंत्रिताः ॥

" अर्घांजलिमपः पीत्वा शुद्धिमाप्नोति वै द्विजः " ॥ इति । बालादिविषये **जाबालिः**—

१५ "मृतं बालं च वृद्धं चानाथं विप्रमनुव्रजेत् । द्विजः स्नानेन शुध्येत घृतप्राशाग्निना विना ॥ "इति । **स्मृत्यंतरे**—

"अनाथमनुपेतं च प्रेतं कन्यामनुव्रजन् । सर्ववेदं क्रतुश्रेष्ठमाचामेन्न घृतं पिबेत्" ॥ इति । क्षत्रियादिशवानुगमने ब्राह्मणस्य विशेषमाह **पराशरः** ( ३।४९–५२ )—

" क्षत्रियं मृतमज्ञानाद्ब्राह्मणो योऽनुगच्छति । एकाहमशुचिर्भूत्वा पंचगव्येन शुध्यति ॥

२० " शवं च वैश्यमज्ञानाद्ब्राह्मणो योऽनुगच्छति । कृत्वाशौचं द्विरात्रं च प्राणायामान्षडाचरेत् ॥

" प्रेतीभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः । अनुगच्छेन्नीयमानं त्रिरात्रमशुचिर्भवेत् ॥

" त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम् । प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति"॥ इति । अज्ञानान्मौढ्याद्यादृच्छिकानुगमने **त्वङ्गिराः**—"शूद्रस्य प्रेतस्य यदृच्छयानुगमने ब्राह्मणः स्रवन्तीमासाद्य गायत्र्या अष्टसहस्रं जपित्वा शुध्यति । क्षत्रियानुगमने तु अर्धसहस्रम् । वैश्यानुगमने

२५ पादोनम् " इति । **स्मृतिरत्ने** —

" एकाहात् क्षत्रिये शुद्धिर्वैश्ये शुद्धिर्द्व्यहेन तु । शूद्रे दिनत्रयं प्रोक्तं प्राणायामशतं पुनः "॥ एवं च सति क्षत्रियस्य वैश्यशवानुगमने एकाहं शूद्रशवानुगमने द्व्यहं वैश्यस्य शूद्रशवानुगमने एकाहमिति । **विज्ञानेश्वरीये तु** अनंतरानुगमने एकाहमेकांतरानुगमने पक्षिणीति । **स्मृत्यर्थसारे च**

" स्नेहादिना जातिषूत्कृष्टजातिषु चानुगमने सचैलं स्नात्वाऽग्निं स्पृष्ट्वा घृतं प्राश्य पुनः स्नात्वा

३० शुध्येत् " । घृतप्राशनं शुध्यर्थमेव न भोजनस्थाने सपिंडेष्वनुगमनं विहितमेव हीनजातिषु ब्राह्मणस्य क्षत्रियानुगमने एकाहमाशौचं वैश्यानुगमने पाक्षिणी शूद्रानुगमने त्रिरात्रं समुद्रगामिन्यां महानद्यां स्नात्वा प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्येत् । क्षत्रियस्य वैश्यानुगमने त्वेकाहं शूद्रानुगमने पक्षिणी वैशस्य शूद्रानुगमने त्वेकाहमिति ।

द्विजानां शूद्रशवानुगमननिषेधे कदा तैः शूद्रानुसर्तव्या इत्याकांक्षायामाह **पाराशरः**—
" विनिर्वर्त्य यदा शूद्रा उदकांतमुपस्थिताः । द्विजैस्तदानुगंतव्या एष धर्मः सनातनः "॥ इति ।
उदकशब्देन उदकक्रिया उच्यते। तस्या अंतः समाप्तिः। तां निर्वर्त्याशौचं परिसमाप्य यदा स्थिताः
तदा द्विजैरनुगंतव्याः अनुसर्तव्याः इत्यर्थः । **स्मृत्यंतरे**—

"तृतीयमासादारभ्य न कुर्याद्गर्भिणीपतिः । क्षौरं शवानुगमनं दूरयात्रां प्रतिग्रहम् "॥ इति । ५

**अन्यत्र**—

"अस्नात्वा चेद्विशेद्ग्रामं श्मशानाद्बुद्धिपूर्वकम्। त्रिरात्रेण विशुद्धिः स्यादमस्त्याह्नास्तथैव च" ॥इति।

**तथा**—

"संस्कारोपक्रमात्पूर्वं कामं स्नात्वा विशुध्यति। आरब्धे तु हि संस्कारे समाप्ते स्नानमाचरेत्"॥ इति ।
एतदसपिंडविषयम् । १०

"आरंभात्प्राक् परः स्नायात्तस्य शुद्धिर्भविष्यति" इति। "सर्वेषां च सपिंडानां दहनाच्चैव योषिताम्"॥
**इति स्मरणात्** । विप्रस्य सर्ववर्णविषये संचितेऽस्थ्नि स्नानं संचिते त्वाचमनम् ।

अत्र **पारस्करः**—

"अस्थिसंचयनादर्वाग्रुदित्वा स्नानमाचरेत् । अंतर्दशाहे विप्रस्य तूर्ध्वमाचमनं स्मृतम् " ॥ इति ।

**स्मृतिरत्ने**— १५

"मृतस्य यावदस्थीनि ब्राह्मणस्याहृतानि तु । तावद्यो बान्धवस्तत्र रौति तत् बांधवैः सह ॥
" तस्य स्नानात् भवेच्छुद्धिस्ततस्त्वाचमनं स्मृतम् " ॥ इति ।

" सचैलं स्नानमन्येषामकृते त्वस्थिसंचये । कृते तु केवलं स्नानं क्षत्रविट्शूद्रजन्मनाम् "॥ इति ।
ब्राह्मणस्य क्षत्रियवैश्यमरणरोदने अस्थिसंचयनादर्वागेकाहाशौचं सचैलं स्नानं च तदूर्ध्वं सचैल-
स्नानमात्रम्। तथा च **माधवीये**— २०

" अनस्थिसंचये विप्रो रौति चेत्क्षत्रवैश्ययोः। तदा स्नात्वा सचैलं तु द्वितीयेऽहनि शुध्यति"॥ इति ।

" कृते तु संचये विप्रः स्नानेनैव शुचिर्भवेत् ।

" मृतमुद्दिश्य यो गच्छेत्स घृतप्राशनं चरेत् । वर्जयेत् तदहोरात्रं जपहोमार्चनादिकम् " ॥ इति ।

**विज्ञानेश्वरोऽपि**—

" मृतस्य बांधवैः सार्धं कृत्वा तु परिदेवनम् । वर्जयेत्तदहोरात्रं दानं श्राद्धादिकर्म च " ॥ इति । २५
शूद्रमरणे विप्रादीनामस्थिसंचयनात्प्राक् तदूर्ध्वं चाशौचतारतम्यमाह **पारस्करः**—

" अस्थिसंचयनादर्वाग्यदि विप्रोऽश्रुवान् भवेत् । मृते शूद्रे गृहं गत्वा त्रिरात्रेण विशुध्यति ॥

" अस्थिसंचयनादूर्ध्वमश्रुपाते द्विजातयः। अहोरात्रेण शुध्यंति सवासःक्षालनेन च ॥

" सजातेर्दिवसादेव त्र्यहात्क्षत्रियवैश्ययोः । स्पर्शं विनानुगमने शूद्रे नक्तेन शुध्यति "॥ इति ।
क्षत्रियवैश्ययोः शूद्रमरणे रोदने त्र्यहं शूद्रस्य स्वजातिशवस्पर्शे आतुरव्यंजने अनुगमने च दिन- ३०
मन्यथासंचयात् प्रागेककालः । ऊर्ध्वं स्नानमेवेत्यर्थः ।

---

१ क्ष-स्यांह ।

असपिंडस्सजातीयप्रेतनिर्हरणाशौचमाह **मनुः** ( ५।१००-१०१ )—

" असपिंडद्विजं प्रेतं विप्रो निर्हृत्य बंधुवत् । विशुध्यति त्रिरात्रेण मातुराप्तांश्च बांधवान् ॥

" यद्यन्नमत्ति तेषां तु दशाहादेव शुध्यति । अनदन्नन्नमन्हैव न चेत्तस्मिन् गृहे वसेत् " ॥ इति ।
यः स्नेहादिना शवनिर्हरणं कृत्वा तस्यैवान्नमश्नाति तद्गृहे च वसति तस्य दशाहेनैव शुद्धिः । यस्तु
५ केवलं तद्गृहे वसति न पुनस्तदन्नमश्नाति तस्य त्रिरात्रं यः पुनर्निर्हरणमात्रं न तद्गृहे वसति न चाश्नाति
तस्यैकाह इत्यर्थः । निर्हारशब्दार्थः **स्मृत्यंतरे** दर्शितः—

" प्रेतस्य वासः स्रग्गन्धभूषणाद्यैरलंक्रिया । वहनं दहनं चेति निर्हारार्थो निरुच्यते " ॥ इति ।
**संग्रहेऽपि**—

" यः प्रमीतमलंकुर्याद्वहेद्वाथ दहेत् द्विजम् । स शुद्धस्त्वेककालेन कालशेषं बहिर्वसेत् ॥

१० "ग्रामे वसन् दिनाच्छुध्येत्त्र्यहात्प्रेतगृहे वसेत् । निर्हृत्य यो मृतान्नं च भुंक्ते स तु दशाहतः"॥ इति ।
कालशेषं बहिर्वसन् दिवा निर्हरणे आनक्षत्रोदयं रात्रावार्कोदयं ग्रामाद्बहिर्वसन्नेककालेन तत्काल-
शेषेण दिवामात्रेण रात्रिमात्रेण वा शुध्यति । ग्राम एव वसन् दिनेन प्रेतगृहे वसन् त्रिरात्रेण
यस्तु निर्हृत्य प्रेतान्नं भुंक्ते स प्रेतगृहे अन्यत्र वा वसन् दशाहतः शुध्यतीत्यर्थः । **हारीतः**—

" प्रेतनिर्हरणं कृत्वा ग्रामं न विशेदा नक्षत्रदर्शनाद्रात्रौ चेदा रविदर्शनात्ततः शुद्धः " इति ।
१५ **अखंडादर्शे**—

" दाहं विनालंकरणं वाहं कृत्वा दिनस्य तु । शेषेण शुद्धिरुक्तैव रात्रावप्युषसि प्लवः "॥ इति ।

**विज्ञानेश्वरीये**—

" कृच्छ्रपादोऽसपिंडस्य प्रेतालंकरणे कृते । अज्ञानादुपवासः स्यादशक्तौ नक्तमिष्यते " ॥ इति ।

**स्मृत्यंतरे** विशेषः—

२० "सज्योतिस्तु बहिर्वासो रात्रौ नक्षत्रदर्शनात् । प्राशयेत्पंचगव्यं च ब्राह्मणैः स्वस्ति वाचयेत्"॥ इति ।

**भरद्वाजश्च**— "असपिंडशवस्य स्नानालंकरणे कृते दिवसं वहने कृते स्नात्वा दश प्राणायामान्
कृत्वा नक्षत्रदर्शनात्पूर्वं ग्रामाद्बहिरासीत तावदेवाशौचं रात्रौ सूर्योदयात्पूर्वं ग्रामाद्बहिरासीत ।
अन्यथा तद्ग्रामं प्रविष्टे शवहर्तुरेकाहं तद्गृहं प्रविष्टे त्र्यहं तत्र भोजने कृते दशाहं भवति"॥ इति ।
पर्युषितशवादिनिर्हारे समानोदकशवनिर्हारे चाशौचम् । पर्युषितशवरजस्वलासूतिकागर्भिणीवहने
२५ प्रायश्चित्तमुक्तं **बोधायनेन**—

" कृत्वा तु पञ्चगव्यस्य प्राशनं च तथा गराम् । ग्रासं दत्वा यथाशक्ति गायत्रीजपमाचरेत् ॥

" ब्राह्मणानां च वाक्येन घृताग्निस्पर्शनेन च । पुण्याहेन विशुध्येत सूत्रमन्यत्तु धारयेत् " ॥ इति ।
सपिंडानां प्रेतनिर्हरणस्य विहितत्वादाशौचाधिक्यमग्निस्पर्शादिकं च नास्तीत्याह **देवलः**—

" विहितं तु सपिंडानां प्रेतनिर्हरणादिकम् । तेषां करोति यः कश्चित् तस्याधिक्यं न विद्यते"॥ इति ।
३० **समानोदकप्रेतवहनादौ** दशाहाशौचमाह **मांडव्यः**—

" शावे च सूतके चैव त्र्यहात्तूदकदायिनः । शववाहं तु कुर्याच्चेद्दशाहांतं भवेत्क्रिया " ॥ इति ।
आशौचमुदकदानं च क्रिया । **अखंडादर्शे च**—

" समानोदकाः प्रकुर्वीरन्संस्कारं वहनं यदि । दशाहांतेन शुद्धिः स्यादित्याह भगवान्भृगुः"॥ इति ।

**भारद्वाजः**—

" यः समानोदकं प्रेतं वहेद्वाथ दहेत वा । तस्याशौचं दशाहं स्यादन्येषां तु त्र्यहं विदुः " ॥ इति ।

अन्येषां योनिबंधूनाम्। तथा च **शंखः**–"त्र्यहं च योनिबंधूनामाशौचं वहनादिषु"। **स्मृत्यंतरेऽपि**–

" शाखाशौचे दहेत्प्रेतं पक्षिण्याशौचवान्यदि । त्र्यहं मत्या द्व्यहं तु स्यादमत्या शुद्धिसाधनम्"॥ इति । ५

**अन्यत्रापि**—

" पक्षिण्याशौचसंमिश्रे दहने मतिपूर्वके । आशौचिनां त्रिरात्रं स्यादिति स्मृतिविदो विदुः " ॥ इति ।

असवर्णशवनिर्हारे **गौतमेन** विशेषो दर्शितः ( १४।२६ )—" अवरश्चेद्वर्णः पूर्वं वर्णमुपस्पृशेत् । पूर्वो वा अवरं तत्र शावोक्तमाशौचम् " इति । उपस्पर्शनं निर्हरणम् । **वृद्धपराशरः**—

" योऽसवर्णं तु मूल्येन नीत्वा प्रेतं दहेन्नरः । आशौचं तु भवेत्तस्य प्रेतजातिसमं सदा " ॥ इति । १०

एतदापदि द्रष्टव्यम् । अनापदि तु **व्याघ्रः**—

" अवरश्चेत्परं वर्णं परो वाप्यवरं यदि । वहेच्च शावमाशौचं दृष्टार्थे द्विगुणं भवेत् " ॥ इति ।

स्नेहादिना विजातीयशवनिर्हारे शवजात्युक्तमाशौचम् । भृतिग्रहणे द्विगुणमित्यर्थः ।

**हारीतश्च**—" दृष्टार्थे द्विगुणं भवेत् " ॥ इति ।

**अर्थलोभेन सवर्णशववाहनादावपि** तद्वर्णाशौचमाह **व्यासः**— १५

" यदि निर्हरति प्रेतं प्रलोभाक्रांतमानसः । दशाहेन द्विजः शुध्येत् द्वादशाहेन भूमिपः ॥

" अर्धमासेन वैश्यस्तु शूद्रो मासेन शुध्यति " ॥ इति ।

**शूद्रेण** विप्रशवनिर्हरणं न कारयेदित्याह **मनुः** ( ५।१०४ )—

"न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण हारयेत् । अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंस्पर्शदूषिता," ॥ **इति** ।

आहूतिः शवाहुतिः । अत्र स्वेषु तिष्ठत्स्वित्यविवक्षितम् । अस्वर्गत्वदोषश्रवणात् । **यमोऽपि**— २०

" न शूद्रो यजमानं वै प्रेतीभूतं समुद्वहेत् । यस्यानयति शूद्रोऽग्निं तृणं काष्ठं हवींषि च ॥

" प्रेतत्वं हि सदा तस्य स चाधर्मेण लिप्यते " ॥ इति ।

गर्भवतः ब्रह्मचारिणश्च पित्राद्यन्यशवनिर्हरणनिषेधः । **मनुः**—

" दहनं वहनं वापि प्रेतस्यान्यस्य गर्भवान् । न कुर्यादुभयं तत्र कुर्यादेव पितुः सदा ॥

" ज्येष्ठस्य चानपत्यस्य मातुलस्यासुतस्य च " ॥ इति । २५

**देवलः**—

"ब्रह्मचारी न कुर्वीत शवदाहादिकाः क्रियाः । यदि कुर्यात्ततः कृच्छ्रं पुनःसंस्कारमेव च " ॥ इति ।

तस्यैव पित्रादिवहनादौ व्रतलोपो नास्तीत्याहतुः **मनुदेवलौ**—

" आचार्यं स्वमुपाध्यायं पितरं मातरं गुरुम् । निर्हृत्य तु व्रती प्रेतं न व्रतेन वियुज्यते"॥

**भृगुः**–"मातामहं मातुलं च तत्पत्न्यौ चानपत्यके । व्रती संस्कुरुते यत्र व्रतलोपो न विद्यते"॥ **इति** । ३०

**माधवीये**—

" आचार्यं स्वमुपाध्यायं गुरुं वा पितरं च वा । मातरं वा स्वयं दग्ध्वा व्रतस्थस्तत्र भोजनम् ॥

" कृत्वा पतति यत्तस्मात्प्रेतान्नं तु न भक्षयेत् ।

"अन्यत्र भोजनं कुर्यान्न च तैः सह संवसेत् । एकाहमशुचिर्भूत्वा द्वितीयेऽहनि शुध्यति" ॥
निर्हारदिनमात्रमेवाशुचिर्द्वितीयादिदिवसेषु प्रेतकृत्योत्तरकालं स्नानाच्छुध्यतीत्यर्थः ॥

**वसिष्ठः** ( २३।७–८ )—" ब्रह्मचारिणः शवकर्मिणो व्रतान्निवृत्तिरन्यत्र मातापित्रोः " ॥ इति ।
५ **अनाथब्राह्मणवहनादौ** सद्यःशौचं विदधाति **पराशरः** ( ३।४५–४७ )—

" अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः । पदे पदे यज्ञफलमानुपूर्व्याल्लभंति ते ॥

" न तेषामशुभं किंचित्पापं वा शुभकर्मणाम् । जलावगाहनं तेषां सद्यःशौचं विधियते " ॥ इति ।

" असगोत्रमबंधुं च प्रेतीभूतं द्विजोत्तमम् । वहित्वा च दहित्वा च प्राणायामेन शुध्यति " ॥ इति ।
**बंधुमित्रादिरहितब्राह्मणवहनस्पर्शनदहनादौ** स्नानप्राणायामाभ्यां शुद्धिरित्यर्थः । अग्नि-
१० स्पर्शोऽपि कर्तव्यः । तदुक्त**मंगिरसा**—

" यः कश्चिन्निर्हरेत् प्रेतमसपिंडः कथंचन । स्नात्वा सचैलं स्पृष्ट्वाऽग्निं तस्मिन्नेव क्षणे शुचिः" ॥ इति ।

**याज्ञवल्क्यः** ( प्रा. १४ )—

" प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि । इच्छतां तत्क्षणाच्छुद्धिः परेषां स्नानसंयमात् " ॥ इति ।
निंबपत्रदंशनादिवेश्मप्रवेशनांतं कर्म न केवलं ज्ञातीनामपि तु स्नेहादिना प्रेतनिर्हरणं कुर्वतामपि
१५ भवति । आशौचं च यथोक्तं भवति । धर्मार्थं प्रेतनिर्हरणं कुर्वतां परेषां तु तत्क्षणात् स्नान-
प्राणायामाभ्यामेव शुद्धिरित्यर्थः । वृद्ध**पराशरः**—

" प्रेतस्पर्शनसंस्कारैर्ब्राह्मणो नैव दुष्यति । वोढा चैवाग्निदाता च सद्यः स्नात्वा विशुध्यति" ॥ इति ।

**ब्राह्मे**—

" अनाथं ब्राह्मणं दग्ध्वा क्षत्रियं वैश्यमेव वा । पितृमेधान्महायज्ञफलमाप्नोति मानवः ॥

२० " संन्यासिनां तु संस्कर्तुर्नाशौचं नोदकक्रिया । अश्वमेधफलं तत्र भवन्नास्त्यत्र संशयः " ॥ इति ।

**बोधायनश्च**—

" सर्वसंगनिवृत्तस्य ध्यानयोगरतस्य च । न तस्य दहनं कुर्यान्नाशौचं नोदकक्रिया ॥

" ये वहंति महात्मानं दृष्ट्वा स्पृष्ट्वा द्विजातयः । हयमेधफलं तेषामस्तीत्येवं विदुर्बुधाः " ॥

**संग्रहे**—"यतीन्द्रानाथनिर्हारे सद्यःशुद्धिर्महाफलम् " इति । **स्मृत्यर्थसारे** तु धर्मार्थशवनिर्हरणे
२५ स्नानालंकारवहनदहनादिके कृते द्विजानां सचैलस्नानात् सद्यःशुद्धिः । महापुण्यं शुभं चायुश्च
भवति । तत्राप्यनाथप्रेतनिर्हरणे अनंतं पुण्यं शुभं चायुश्च वर्धते । धर्मार्थमुत्कृष्टजातिप्रेतनिर्हरणे
सर्वेषां सचैलस्नानाच्छुद्धिः । धर्मार्थं स्वजातिप्रेतनिर्हरणे सचेलस्नानप्राणायामैः शुद्धिः । धर्मार्थं
हीनजातिप्रेतनिर्हरणे सर्वेषां सचैलं स्नात्वा निम्बपत्रभक्षणादिगृहप्रवेशनांते कृते शुद्धिः " इति ।

**स्मृत्यंतरे**—

३० " ऊह्यमानं शवं दृष्ट्वा सवासा जलमाविशेत् । अलंकृतं शवं दृष्ट्वा सचैलः स्नानमाचरेत् ॥

" आचम्य केवलं प्रेतं दृष्ट्वा काष्ठवदाचरेत् " । इति । काष्ठवदाचरणं जलावगाहनम् ।

**वसिष्ठः** ( २३।२५-२६ )—

" मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमाशौचं अस्निग्धे त्वहोरात्रमित्येतदबुद्धिपूर्वविषयम्" । अबुद्धिपूर्वविषये **मनुः**—" नारं स्पृष्ट्वास्थिसस्नेहं स्नात्वा विप्रो विशुध्यति " इति ।
" आचम्यैव तु निःस्नेहं गां स्पृष्ट्वा वीक्ष्य वा रविम् " इति । **चंद्रिकायाम्**—
" जनने मरणे चैव वपनं दशमेऽहनि । आतस्मान्नाधिकारी स्यादाशौचं सर्वदा भवेत् ॥ ५

" तैलाभ्यंगे तथा वांते श्मश्रुकर्मणि मैथुनं । अनाचम्योच्चरन्विप्रस्त्रिरात्रमशुचिर्भवेत् " ॥ उच्चरन्पुरीषोत्सर्गं कुर्वन्नित्यर्थः । एवमादीन्यन्यान्यपि आशौचनिमित्तानि द्रष्टव्यानि ॥

आशौचिनो वर्जनीयमुक्तं । **संग्रहे**—
" न विशेद्देवतागारं न कुर्याद्वंदनाद्यपि । मंदिरं न प्रवेष्टव्यं प्रविष्टस्य फलं शृणु ॥

"चंडालयोनिमासाद्य जन्मानि नव पंच च । भविष्यति वरारोहे व्याधिक्रूरोऽतिनिष्ठुरः " ॥ इति । १०
आशौचिस्पर्शे बिंबस्य संप्रोक्षणमाह **शौनकः**—

" चंडालसूतिकोदक्याशावसूतकदूषिते । निमित्ते समनुप्राप्य सद्यः कृत्वा समर्चयेत् " ॥
अभिवादनस्य निषेधमाह **आपस्तंबः** ( १।४।१४।१८-२० )—" अप्रयतेन नाभिवाद्यम् । तथा प्रयताय । अप्रयतश्च न प्रत्यभिवदेत् " ॥ इति । एकादश्युपवासस्यावर्जनीयत्वमुक्तं **पुराणे**—
" सूतके तु नरः स्नात्वा प्रणम्य शिरसा हरिम् । एकादश्यां न भुंजीत व्रतमेतन्न लुप्यते ॥ १५
" मृतकेऽपि न भुञ्जीत एकादश्यां सदा नरः " ॥ इति । **विष्णुरहस्ये** च—

"सूतके मृतके वाऽपि न त्याज्यं द्वादशीव्रतम् । एकादशीव्रतं कुर्यान्नित्यं काम्यं तु वर्जयेत् " ॥ इति ।
**शावाशौचिनां नियमविशेषमाह मनुः** ( ५।७२ )—

" अक्षारलवणान्नाः स्युः निमज्जेयुश्च तेऽन्वहम् । मांसाशनं च नाश्नीयुः शयीरंश्च पृथक्क्षितौ " ॥
**याज्ञवल्क्योऽपि** ( प्रा. १६ )— २०

" क्रीतलब्धाशना भूमौ स्वपेयुस्ते पृथक्क्षितौ । पिंडयज्ञावृता देयं प्रेतायान्नं दिनत्रयम् " ॥ इति ।
क्रीतमयाचितलब्धं वा अशनं येषां ते क्रीतलब्धाशना भवेयुरिति वाक्यशेषः । क्रीतलब्धाशननियमात्तदलाभे अशनमर्थात्सिद्धम् । अत एव **वसिष्ठः** (४।१४-१५)—"अधप्रस्तरे त्र्यहमनश्नन्त आसीरन् । क्रीतोत्पन्नेन वा वर्तेरन् " इति । अधप्रस्तरः आशौचिनां शयनार्थं तृणप्रस्तरः ॥
**गौतमोऽपि** ( १४।३४ )—" अधःशय्यासनिनो ब्रह्मचारिणः सर्वे " इति । २५

अघांतकृत्यमाह **मनुः** ( ५।९८ )—

"विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधम् । वैश्यः प्रतोदं रश्मिं वा यष्टिं शूद्रः कृतक्रियः"॥ इति। अस्यार्थोऽभिहितो **विज्ञानेश्वरेण** (पृ. १८७ पं. ८-१०)—"विप्रोऽनुभूताशौचकालः कृतक्रियः कृतस्नानः हस्तेनापः स्पृष्ट्वैव शुध्यति । स्पृष्ट्वेति स्पर्शनक्रियैवोच्यते। न स्नानमाचमनं वा। वाहनादिषु
५ तस्यैवानुषंगात्"। **श्रुतिरपि**—"अघांते अघभाजः संभवे स्नात्वा ग्रामं प्रविशेयुः" ॥ इति। जननमरणाशौचांते आशौचिनः संगवे स्नात्वा गृहं प्रविशेयुरित्यर्थः । तथा च **स्मृत्यंतरे**—

"मृते च सूतके चांते संगवे स्नानमाचरेत् । संगवात्परतः स्नानमार्तवेषु विशिष्यते" ॥ इति।

**संवर्तः**—

"आशौचे निर्गते कुर्याद्गृहसंमार्गलेपने । सवासा जलमाप्लुत्य शुद्धिः पुण्याहवाचनैः" ॥

१० **संग्रहे** च

"आशौचांते कृतस्नानः स्वस्तिवचनपूर्वकम् । ब्राह्मणान् भोजयेत्तत्र शुद्धये विष्णुतुष्टये" ॥ इति।

इति **वैद्यनाथदीक्षितविरचिते स्मृतिमुक्ताफले "आशौचनिरूपणं" नाम तृतीयः परिच्छेदः**॥

हरिः ओम् ॥

शके १७६५ शोभकृन्नामसंवत्सरे ज्येष्ठकृष्णपंचम्यां भृगुवासरे तद्दिने इदं पुस्तकं समाप्तम् ॥
१५ श्रीयवतेश्वरार्पणमस्तु ॥